३—तदिदं खलु द्विविधं स्वातन्त्र्यम्। शारीरं मानसं च। तत्र शारीरं नाम तत् यत्र कश्चन देशो जातिर्वा देशान्तरेण जात्यन्तरेण वा आत्मनः समाक्षिप्तं राज्याधिकारं पुनरासादयति। यत्पुनरपरं मानसं नाम, तत्खलु मानसानां विचाराणामपराधीनतया भवति। तथाहि। यवनाः खलु खड्गबलेन हिन्दूनां धार्मिकान् विचारान् विपरिणमय्य तेषां मनःसुखाधिकारमकुर्वन्। हरिवर्षेऽपि रोमनकैथोलिकसेतिमतस्य तावत् प्रभुत्वमासीत् यावद्विज्ञानानुसारं प्रत्यक्षमपि किंचिदालोचयन्न नाम जनः पारयतिस्म तद्विरुद्धं मनागपि वक्तुम्।

४—परं स्वातन्त्र्यं हि नाम मनुष्याणां सुखप्राप्तेः परं साधनमित्युपपादितमस्माभिः। अनेनैव स्वातन्त्र्याभिलाषेणातिमात्रमुत्तेजिताः केचिन्महाभागास्तथा लोकोत्तरं किमप्यनुष्ठितवन्तोयदद्यापि तत्र तत्र जनास्तेषां नाम स्मारं स्मारमात्मानं पवित्रमिव मन्यन्ते।

कोहि नाम हौलैण्डवास्तव्यो भवेत् यः खल्वद्यापि 'विलियम ओरैञ्ज' इति पावनस्य नाम्नः स्मरणेन आत्मनि काञ्चिदपूर्वां जागृतिं नानुभवति।

कोवा इटली वास्तव्यो यो 'मेजिनीति नामोच्चारणेनैव नापूर्वं मोदमावहति। कस्य आमेरिकावासिनो जनस्य चेतसि 'वाशिङ्गटनेति पावनं नाम स्मृत्वा जातीयता न सञ्चरति।

को वा कृष्णवर्णो 'नीग्रो' भवेत् यो दासप्रथानिवारकं तत्र भवन्तं 'इब्राहीमलिन्कनेति' महात्मानं प्रत्यहं प्रेम्णा न स्मरति।

यथैवैषां शारीरिक स्वातन्त्र्यापादकानां महात्मनां नामानि सामोदमनुस्मियन्ते तथैव तत्र भवतो 'ल्यूथर' महोदयस्यापि पावनं नाम सर्वत्र 'प्रोटैस्टैण्ट' मतमनुवर्त्तमानानां समाजे सोल्लासमाद्रियते।

यत्सत्यं न तेन कश्चनापि देशः स्वाधीनः कृतस्तथापि तेन तन्मानसं स्वातन्त्र्यमापादितं यत्खलु शारीरिकात् स्वातन्त्र्यादणुमात्रेणापि नावहीयते अपितु कथञ्चिदतिरिच्यत एव ।

शारीर मानसयोः सर्वथापि मानसं बलं बलीयः । यः खलु मनसा परस्मिन्नायत्तः अवश्यमसौ शरीरेणापि परायत्तः । तदित्थं गते विचारस्वतन्त्रतापादकाः महात्मानः सुतरां मनुष्यजातेः वहुतरं श्रेयः समाचरन्ति एवं विधेष्वेव महात्मसु मूर्द्धाभिषिक्तस्तत्र भवान् दयानन्दः । हन्त ! कष्टं खल्विदं यद्दयानन्दो भारतस्य शारीरिकीं स्वतन्त्रतां नापादयितुमशकत् तथापि मनः स्वातन्त्र्यापादनेनैवासौ महात्मनां पदवीमधिरोहति । कथञ्च तत्र भवता तदापादितमिति समासतः किञ्चिदालोच्यते । प्राङ्महर्षेस्तावन्महोदधिकल्पेऽस्मिन् भारतेवर्षे द्विविधो बिचार तरङ्गः प्रवहति स्म । एकस्तावत् पूर्वीय विचाराणामपरश्च पाश्चात्यानाम् । तत्र द्विविधोपि विचार प्रवाहस्तस्मै न रोचते स्म । यतः पूर्वस्मिँस्तावदेका श्रद्धा सीमानमतिक्रान्तवती अपरस्मिँश्चापरा । सर्वं च खल्वतिमात्रमश्रेयसेकल्पते । तत्र ब्राह्मणम्मन्याः कतिपये देवानां प्रियाः "प्राचामेव ऋषिमहर्षीणां पन्थानमनुसरामो" वयमित्याघोष्य यथेष्टं जन्मना वर्णव्यवस्थादि सिद्धान्तान् प्राचारयन् । लोका अपि तेषामेव कथनं वेदवाक्यमिवाभ्युपगच्छन्तः श्रद्धया सर्वथापिताननुवर्त्तन्ते स्म । अपरत्र च केचित्तार्किकंमन्याः ब्राह्मणैः प्रचारितेभ्यः सिद्धान्तेभ्यः सर्वथा तिलाञ्जलिं दत्वा पाश्चात्यविचक्षणैरुक्तमर्थं प्रत्यक्षं श्रद्दधानाः सर्वथापि नास्तिकत्वमाश्रितवन्तः । इत्थं च गते प्रत्यहमधःपात एवाभवत् । यथोक्तमभियुक्तैः—"अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे" इति । तदित्थमधः पातमालोक्य दयार्द्र चेतसा महर्षिणा एकत्र तावत् ब्राह्मणब्रुवेभ्यो लोकानां समाकृष्य विश्वासः प्राचीनेषु ऋषि महर्षिषु परिवर्त्तितः ।

अपरत्र चासौ आर्य्यसमाज नामानं मतमास्थाय पाश्चात्यवि-ज्ञानानुयायित्वं लोकानामवारयत् । तदित्थं सर्वथापि भारतीयान् विचारपारतन्त्र्यान्मोचयन् दयानन्दः सत्यमेव भारतीयानतिमात्र-मनुगृहीतवान् । चन्द्रज्योत्स्नाधवलं चाक्षयं यशोलेभे ।

विद्यासागरः

—:०:—

# * दुर्जनस्तुति सज्जननिन्दा च *

सर्वोपि कविरेकान्तं सतः स्तौति न चासतः ।
असतां गुणमुत्सर्जन् किं कविर्गुणलोलुपः ॥ १ ॥

सुखदुःखे समेयस्य तत्स्तवेनापि को गुणः ।
स्तवो हि स्तुत्यतोषी सन् सफलो गण्यते बुधैः ॥२ ॥

सज्जनः स्तव माकर्ण्य न हृष्यति न सीदति ।
अलीकाऽपि सन्तुष्येत् स्तवाद्दुर्जन चक्रराट् ॥ ३॥

प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्त्तते ।
सज्जने विफलं दृष्ट्वा स्तवंकः पुङ्गवो वदेत् ॥ ४ ॥

निन्दामपकृतिं चापि सहमानस्तु सज्जनः ।
क्षमाशीलः सुमर्य्यादः सुखेनास्मान् क्षमिष्यते ॥५॥

दुर्जनः कुपितो नूनं गुणरत्नविवर्जितः ।
दहनोपि[1] जलेनेव स्तवेन प्रशमं भजेत् ॥ ६ ॥

सज्जनस्य वचोगुम्फं धारयित्वा पुमांस्ततः ।
रम्यप्रसून गुम्फेन किमात्मानं न वञ्चयेत् ॥ ७ ॥

दुर्जनस्य वचोविप्रुड् मलिनीकृत कायवान् ।

---

१—अग्नेरपि दहनात्मकत्वे मण्यभावस्य कारणता । इति नव्या-स्तार्किकाः ।

कायी कर्दमतो नूनं सदा परिहृतो भवेत् ॥ ८ ॥
सज्जनस्य वचोधारां निपीय श्रुतिमान् जनः ।
सुधामपि सुरैरिष्टां भजते न कदाचन ॥ ९ ॥
वचनं दुर्जनस्यैव कटु दाहि लिहन्नपि ।
कालकूटं तिरस्कृत्य सदैवोपरमेद् बुधः ॥ १० ॥
सकृत्कृत्वः सतां मैत्री सर्वेषां मुक्तिदायिनी ।
हा हा ! सुखं कामयतां जगत् सौख्यं विलुप्यते ॥११
असतोऽपि भुजङ्गस्य संस्पर्शान्मोहमापितः ।
जनो भूयो जगद् भोग पारम्पर्यं समाश्नुते ॥ १२ ॥
त्रिलोके यदि सन्तः स्युः सर्वत्रगुण शंसिनः ।
सर्वेऽपि पापभाजः स्युः लालिता बालका इव ॥ १३ ॥
दग्धास्येभ्योऽसतां निर्यज्ज्वल तीव्रं वचः सदा ।
सतो ह्युद्वेजयन्नित्यं प्रवर्त्तयति सत्पथि ॥ १४ ॥
सन्तः परोपकरणे त्यक्तात्मानो ह्यसून् जहुः ।
[1]असूर्यानपि को लोकान् भजेतात्मविलोपकृत् ॥ १५ ॥
असन्तः परकीयं तु काञ्चनादिकमात्मसात् ।

---

१—असुर्या नाम ते लोका............तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ।

कृत्वा केनाप्युपायेनात्मैव[2] सर्वमबूबुधन् ॥ १६ ॥
उदारचरितस्यापि सतः कौटुम्बकं[3] मही
को नाम धीमान् मर्षेतानर्थमेतावदाहितम् ॥ १८ ॥
असतस्तु परे सन्तः द्विषन्तो भान्ति सर्वतः ।
वाचा च मनसाकृत्याऽरयो वध्या अहो नयः ॥ १८ ।
सतस्तु महतो यत्नादपि वाङ् नु सकृद्द्विधा ।
असतः पुनरन्यत्र लाघवात् कतिधा भवेत् ॥ १८ ॥
सताममरतुल्यानां वासो द्यौर्हि निराश्रया ।
किं कल्पं यावदाचान्तमेभिः पापनदीपयः ॥ २० ॥
असतां तु द्विजिह्वानां त्रयो लोकाः सनातनाः ।
तथापि विधिना नागलोकस्तेभ्योपि निर्मितः ॥२१॥
अहो विधिरयं कीदृग् सद्भ्यो येनतपः कृतम् ।
सुखं च सकलं लोक्यं दुर्जनाय प्रदीयते ॥ २२ ॥
अथवा किमु दैवेन, सतां पापफलं तपः ।
असतां पुण्यराशिर्यदैहिकं सुखमीयते ॥ २३ ॥
सज्जनस्तु दिवं यातो मुक्तस्तपनमण्डले ।
भाग्यवैधुर्य्यमेतस्य दह्यतेऽनन्तकालिकम् ॥ २४ ॥
दुर्जनः परमन्यत्र रौरवे नरकेपि सन् ।

२—आत्मैवेदं सर्वमिति श्रुतेः ।
३—उदार चरितानां तु वसुधैव कुटुम्बकम् ।

एवं ख्रीस्तानामागमनात् पूर्वं सर्वथा स्वातन्त्र्यं महिलानां वयं पश्यामः धनाढ्यानां स्त्रियो महान्तं सुखमन्वभूवन्। परमं च पदमवाप्त सामर्थ्यमात्मनो व्यजानन्।

परं भाग्ये विधुरायमाणे को नाम व्यपोहति व्यसनानां सहसोत्पातम्। इत्येकान्ततः पतन्नयं महिलानामुपरि पारवश्य पाशः ख्रीस्तानां मतागमनसमकालमेव रोमदेशं सामस्त्येनाभि व्यापत्। अत्र कथमित्थमेवमापतितम् महिलास्विति पुरातत्वविद एव विवेक्ष्यन्ति। इति यथाप्रयत्नमुपपादितं मया प्राक्तनीनं महिलानां स्वातन्त्र्यम्॥

# चिन्ताग्रस्तः

कृतवित्तविनाशे याहि चिन्ते सुदूरं,
भवति न ममचेतो वासयोग्यंभवत्याः ।
यदि वससि विनाशं मुञ्च शिक्षामृतौघं,
शमय हृदयखेदं त्वत्कृतं पूर्वमेव ॥ १ ॥

स्मरसि हृदय कुड्ये कीटगारोहणान्ते,
स्मरसि च कथमासीन्मामकोदारभावः ।
सुनिपुणमवधाय श्रीमति ब्रूहि मह्यं,
तव बहुरमणीया कीदृशी वासभूमिः ॥ २ ॥

नहि तव सहवासे जायते साधुरक्ता,
विकल मिव परन्तु क्षीयते चित्तमेतत् ।
नहि भुवि निजभूमिं जुष्टकष्टांहि द्रष्टुं,
स्पृहयति हतचित्तः कश्चिदेकोविपश्चित् ॥ ३ ॥

त्वमसि न च न भूमे रक्षकत्वक्षमैव,
स्वयमपितु विशाले चित्तभित्तिं भिनत्सि ।
गतमतिरपि कश्चित्स्वाश्रयानोकहस्थो,
नहि भवति तरूणां छेदकृद्धिंसकोऽपि ॥

अभिलषितपदार्थप्राप्तिसन्देहमाला,
रुचिजनकविनाशो विप्रयोगः प्रियस्य ।
असमय मरणं वा हेतवस्ते विकासे,
हृदिनिहित शरीरा नैव हिंस्यास्त्वयातः ॥ ५ ॥

नहि बलमतुलंत्वं दर्शयोत्तुङ्गरूपे,
सततमबलचित्ताधूतधैर्याय मह्यम् ।
मृगय कमपि वीरं यद्यसि त्वं प्रवीरा,
न खलु शशकहिंसातुष्टि माप्नोति सिंहः ॥ ६ ॥

विशालचित्ता बलिनः पवित्रा,
न जातु धैर्य्यं जहतीष्टनाशे ।
तेऽतो महत्यामपि वैरिपङ्क्त्या,
न्नतेप्रभावात्त्तपिताभवन्ति ॥ ७ ॥

निरुध्य चेतो बलवद्यतन्ते,
तव प्रणाशे सफला भवन्ति ।
हृष्यन्ति माद्यन्ति न दुःखलेशं,
जानन्ति त्वन्त्वेव विपद्यसे रे ॥ ८ ॥

प्रहिणु बलमुदग्रं याचमानाय मह्यं,
भवतु च विमलं मे मानसं रागशून्यम् ।
अपसरतु नितान्तं नाथ चिन्ता पिशाची,
सुखय विपदि विष्टं प्रार्थनं स्वीकुरुष्व ॥ ९ ॥

नाथ,:

# दयानन्दः।

आराध्यतेयो यमिभि हृदब्जे,
विशुद्धबोधेन समाधिमद्भिः।
सृजत्यवत्यत्ति जगन्मुहु र्यं,
स्तमीश्वरं सादर मानतोऽस्मि ॥ १ ॥

आसीदशेष गरिमास्पदतां दधानः,
शास्त्रार्णवो न्मन्थन लब्धसदर्थरत्नः।
मेधाविशेषमहिमा महिताग्र्यबुद्धिः,
शुद्धान्तरः प्रथित कीर्ति रुदारचेताः ॥ २ ॥

दाताविनोदो विदुषांवरिष्ठः,
परोपकारेषु सदानुरक्तः।
लोकोपदेशार्थ मुपात्त कायः,
प्राबोधिसाक्षादिव भक्तियोगः॥ ३ ॥

मन्थानाद्रि धुरन्धरायतिपतेः, सूक्तिः सुधासागरा
द्वेदानां निचया न्महार्ह मणिका निःसार्य्य निसार्य्य ताः।
लोकानां पुरतोऽक्षिपज्जगदिदं भाभिः परीतं यत
श्चिह्नी भूत सुचक्षुषः किल जन स्तर्कार्क विद्योतनैः॥ ४ ॥

गत्वाध्यान समाधिभि र्हरिपदं क्लेशालि संहारकं
निर्द्वैतं निरहं कृतं मदहरं शुद्धं चतं निर्भयम्।
निर्द्वंद्वं पुरुषं परं सुविमल साक्षाच्चकारान्तत
स्तथ्यं चोप दिदेश मन्द्र मुरज ध्वानेन लोकान् परान्॥ ५ ॥

एकं ब्रह्म नचापरं जगदिदं दृश्यं मृषा सर्वथा
स्वप्नज्ञान वदस्य दृश्य जगतः सत्ताहता मानतः,
कार्योपाधि वशाच्च जीवपदवी सैवेश्वरः कारणात्
हित्वा कारण कार्य्यतां पुनरुभौ शुद्धौ हता द्वैतता ॥ ६ ॥

लूता तन्तु दलं विसृज्यच पुनः संवेष्टते तत्स्वयं
जायन्ते जगती तले लयगति जाताश्च शालालयः ।
कीलालाब्धि मिताङ्कतो जललवो भूयो जलेलीयते
तद्वद्ब्रह्म सकाशजं जगदिदं तस्मिन्पुनर्लीयते ॥ ७ ॥

आशैलान्तशिलातल स्थलगल न्मन्दाकिनीपाथस
आरामालिवनालिसुन्दरवनात्पाथोनिधे रोधसः ।
आप्राचीन महीध्र मौलिमुकुटा दापश्चिमाद्रेस्तटा
दद्वैतामृत वर्षिणी भुवितले वाणी मुनेर्नन्दते ॥ ८ ॥

यः पाखण्डमतान् प्रचण्ड पवनैर्युक्त्या प्रकाण्डी कृतैः
शुण्डादण्ड वलेन सुन्दरविसं पद्मीव चाखण्डयत् ।
आलोक्याशु च यस्य तैजसतमं तद्भास्कराभं मुखं
बौद्धै जैंन दलैश्च चञ्चल वलै रीये दिगन्तान्तता ॥ ९ ॥

व्यचारीद्यो ब्रह्मण्यधिगत समाधिः क्षतमलः
व्यतारीद्यो विद्यां सकल मनुजे वाक्पतिरिव ।
समुद्धर्ता वेदाननुपम दयावानृषिवरो
पतत्वस्मिन्सोऽयं कुसुम निकरः प्राञ्जलिदलः ॥ १० ॥

स्वतोऽभाज्योतिर्वैनिखिल निगमानां सुविमलं
स्मृतीनां सर्वस्वं प्रति पदमभूत् सुस्थिरमिव ।

ऋषीणां तेजस्वि प्रतिमयशसा सत्य वचनं
ऋतश्चा भूतस्यो दयमुपगते भावति रवौ ॥ ११ ॥

आनन्द कन्दं दययालसन्तं, श्रीमन्त मन्तः करणे वसन्तम् ।
तपस्विनां वाङ्मय भास्वरन्तं, कृपामयं नौमिसुधां किरन्तम्॥१२॥
अबद्ध वाक्यापि कृति स्तदेषा विद्वत्सभाया मुपहासयोग्या
तथापि हास्निग्ध जनस्य चेतो हरा भवित्रीतिनुमोमुदींमः ॥१३॥

धीराः कुरुध्वं सुतरामसुष्यांतिरस्कृतिं वापि पुरस्कृतिंव ।
तथान दूयेनचवा प्रतीतः कृतिर्यदेषा सुधियांकृते मे ॥ १४ ॥

बुभुत्सुः

# दुर्बल रक्षा

मनुष्याणां शिक्षितसमुदायस्य इयं मन्ये बहुसम्मति स्वीकृतेव व्याहृतिः यत् "जगति गुणवतामाधिक्यं स्यात्, योग्यता लभतामुन्नतमासनम्, अविद्यातमो यायाद् यमालयम्, सन्तुसर्वेऽपि विद्वांसः, सर्वापीयं पृथिवी विद्वद्भिर्योग्यैः प्रत्यह मुन्नति शीलविचारैर्भद्राशयैरादृता ऽऽप्नोत्वचिरेणोन्नतिम्, अपनेयं पृथिवीस्थानां नैर्बल्यम्, सन्तुसर्वेऽपिजीवनधारिणोबलवत्कायाः निर्बलानामभावे योग्यानां भवतु धरातलमुन्नतम्, सर्वत्र भूमण्डले योग्यानामेव सद्भावे विचारमध्यताऽऽधिरोहतु गिरि शिखरम्" –

उक्तिरियं कस्य मनसः सामोदं नानुमोदनीयास्ति, कस्य वा सचेतसो न चेतः शान्तिकरी, कस्य वा हृदयालोः सचक्षु र्विस्फारं न स्नेहनिष्यन्दिनी, कस्य न श्रवसोरुत्सव सवित्री किमधिकं कस्येयं न प्रशस्यास्ति—

साम्प्रतमिदमस्तिविवेचनीयम् किं योग्यप्राचुर्यार्थं विद्वद्वृद्ध्यर्थं सबल बाहुल्यार्थं अयोग्याः अविद्वांसः, निर्बलाश्च सर्वे व्यापादनीयाः उत ते योग्याः विद्वांसः, सबलाश्च विधेयाः—

तत्र पाश्चात्येषु विद्यत एका श्रेणी योग्यतमजीवन ( Survival of the fittest ) वादिनाम्—तेच विद्वांसो योग्य तमानामेव, बलवतामेव जीवनं जगदुपकारि मन्यन्ते नाशयितव्याश्च तेषां मतौ अयोग्याः संसारोन्नतिपथे तीक्ष्णकण्टकसमाः

*अयं च तेषां विचार प्रकारः*—प्रकृतौ दुर्बलरक्षाभावो न जातु विलोक्यते, नहि प्रकृतिर्निर्बलान्दयया रक्षति, नहि कदाचित् प्रबलेन वेगेन सम्मुखमाघ्नन्ती वात्या तृणकुटीर माशीर्दानपुरःसरं संस्थाप्य स्थानान्तरं व्रजति, परमतो विरुद्धं वात्याघातैर्न कदापि प्रासादा भेद्यन्ते, जलविप्लवप्लाविते विश्वस्मिन्नपि नगरे नहि दृढ भित्तयो बलवन्मूलाः पतन्ति शालाः परं दुर्बलदेहानि दारुदरिद्राणि कृशमूलानि यान्त्येव नाशोन्मुखतां गृहाणि—एवं शीतज्वरो ( Malaria ) दुर्बलानामेव रक्त पिपासाकुलजिह्वो भवति, बाध शक्ति विहीना ना मेव पिबति प्राणानिलमहिरिव ।

एवं सर्वत्रापि प्रकृति संसारे दुर्बला एव पीडयन्ते, घात्यन्ते निपात्यन्ते च, नह्यतो जगति दुर्बलेभ्यः स्थानम् । येन जगति जीवन माप्त मिष्यते बलं तेनोपार्जनीयम् । अस्माभिरतः प्रकृतिनियममनुसृत्य दुर्बलविनाशपुरःसरं जगदिदं विधेयं बलवद्बलयितं झटित्युन्नतिपरं च ।

एवंविधेन योग्यतमजीवनवादिनां सिद्धान्तेन को नाम विद्वान्न विस्मितमनाःस्यात् विशेषतो भारत वास्तव्यः । सर्वत्रापि भूमण्डले न केनापि धर्मप्रचारकेण सिद्धान्तोऽयं जन मनःसु प्रचारितः, दयादीप्तचेता भगवान् बुद्धदेवोयदि दीन नाशं शृणुयात् कीदृश मेभितप्येत तदीय स्वान्त मिति मनसाऽऽप्यनुभवितुं दुःशकम्—शङ्कर दयानन्द प्रमुखैः संन्यासि प्रवरै रपि संसारोद्धारकै र्जगदिद मुन्नेतु मुन्नति मार्गे कण्टक भूतानां निर्बलानां नाशोन प्रचारितः परं निर्बलानां निर्बलतानाशायैव तैरयत्यत भूरि—

अपगतायां निर्बलतायां निर्बलानां सम्पत्स्यत एव जगद् निर्बलमिति निर्बलतानाशस्थाने किं निर्बलनाशेन परस्य हिंसापरेण "जगदिदं बलवत् स्यात्" इत्यस्त्यस्माकमिष्टम्, यदीदमुपायान्तरेण सरलेन सम्पद्येत योग्यतमजीवनवादिनां-सिद्धान्तः कस्यनोपहसनीयः स्यात् ?

नहि कश्चित् शोथ व्रण विकृता कृतिं कराग्रं विनैवौषध प्रयोगमुच्छिनत्ति, क्रियत एवौषध प्रयोगेण व्रणात्युपशमः, नहि व्रणवत्कराग्रसमुच्छेदेन शान्तिलाभः कस्यापि विदुषःस्याद-भिलषितोयावद् व्रणजो विकार औषधपथातिगो न स्यात् एवं निर्बलानां नैर्बल्यनाशेनैव निर्बलाःसबला विधेयाः नतु निर्बल नाशः कार्य्यः

किंच, अयोग्याः, योग्याः, योग्यतराः, योग्यतमा इत्यादि तारतम्यं केन क्रियताम्—पुनश्च योग्यतमत्वेनाभ्युपगतेष्वपि तारतम्यसद्भावो ऽनिवार्यएव, एवं सति कश्चिदेक एव योग्यतमो ऽवसाने सिद्धयेदिति किं तस्यैकाकिनोऽसहाय-स्यारण्यपशोरिव जीवनवत्वेन ?

---

## ऋष्यङ्कस्य शोधनपत्रम्

| पृष्ठे | पंक्तौ | | शुद्धम् |
|---|---|---|---|
| २१७ | ११ | नु | ० |
| २१९ | १४ | शारीर | शरीर, |
| ,, | १९ | प्रददर्शू | प्रदर्श्य |
| २२० | १४ | स्वाधा नता | स्वाधीनता |
| ,, | २० | मूति | मूर्ति |
| ,, | २५ | प्रसादा- द्दात्म | प्रसादा- दात्म |
| २२१ | ४ | वत्स्तं | वत्स्र्यंत |
| ,, | १२ | सत्रषणो | सवेषणो |
| ,, | १३ | प्रवेष्ट | प्रवेष्टु |

| पृष्ठे | पंक्तौ | | शुद्धम् |
|---|---|---|---|
| २२४ | ७ | प्रजाय- मान | प्रजायमानम |
| २२५ | १६ | मकलया | माकलया |
| ,, | ,, | याश्वका- रा | याश्वकार |
| ,, | २५ | स्वदेशाय | स्वदेशीय |
| २२६ | १ | आगश्रा- द्धम् | महर्षेः राजनी तिनैपुण्यम |
| ,, | २ | त्यैक | त्येक |
| ,, | १२ | मभगवत् | मभवत् |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२६ | २६ | छत्यैव | छत्य |
| २२८ | १ | आग्रहायणम् | ० |
| " | २ | " | ० |
| " | ६ | " | ० |
| " | १० | अनुष्ठितव्य | अनुष्ठातव्य |
| " | " | शरएयम् | शरण्यम् |
| " | २१ | त्यवे | त्यव |
| " | " | अद्यत्व | अद्यत्वे |
| २२९ | ८ | नुष्ठेय | नुष्ठेयः |
| " | १९ | निदिश | निर्दिश |
| " | २० | पादमेव | पीदमेव |
| २३० | १ | आग्रहयणश्चद्धम् | श्राद्धम् |
| " | ७ | असत्वेन | असत्त्वेन |
| " | ८ | पितणां | पितॄणां |
| २३१ | १३ | प्रवत्तेयुरि | प्रवर्त्तेरन्नि |
| २३२ | १२ | र्भ रधिः | र्भ रद्भिः |
| २३६ | २० | याऽवरो | वाऽवरो |
| २३७ | ६ | रपमा | रूपमा |
| " | ११ | रीत्या | रीत्य |
| " | १५ | तमसा | तपसा |
| २३९ | ११ | पाहियत | पाहियत |
| २४० | ८ | बिजितः | विर्जिताः |
| " | ११ | विकरन्तो | विकिरन्ती |
| " | १९ | नुशधि | नुशाधि |
| २४३ | २८ | प्रकार्षीद् | प्रकर्षाद् |
| " | २७ | हृदय | हृदयं |
| २४४ | ३ | वाष्पादि | वाष्पाति |
| " | ४ | प्रयाता | प्रयातो |
| " | १२ | नैःमङ्गल | नैर्मङ्गल |
| " | " | नवः क्षणैः | नवैः क्षणैः |
| " | १३ | यदितो | परितो |
| २४५ | ४ | लोकयाम् | लोकयामः |
| " | १० | पापयन्ति | पाययन्ति |
| " | १२ | माणा | माणानि |
| " | १३ | वाजिनी | वाजिनौ |
| " | १८ | मात्रं | मात्रात् |
| " | १९ | निमील्यतां | निमील्यन्तां |
| " | " | पिधीयताश्च | पिधीयन्ताश्च |
| " | २१ | मक्षिणां | मक्ष्णां |
| २४६ | ४ | तलपतितो | तलपतितं |
| " | १८ | मयकन्तरा | मयमन्तरेण |
| " | १९ | प्यश्रिणोत् | प्यशृणोत् |
| " | २० | व्यनाशपत् | व्यनाशयत् |
| २४७ | ३ | ग्रन्थसःमु | ग्रन्थः समु |
| " | ६ | एयनध्येमः | एयधीयामहे |
| " | १० | अस्पश्या | अस्पृश्या |
| २४८ | ३ | तश्च | तश्च |
| २५० | ४ | पन्थीनवश्यं | पन्थिनोवश्यं |
| " | २२ | कमक्षया | कर्मक्षया |
| २५१ | ३ | किमित | किमित |
| " | १२ | साशं। | साशं |
| २५५ | १७ | छन्दो | च्छन्दो |
| " | १८ | स्त्री | स्त्रो |
| २५६ | ८ | दृढ़ो | दृढो |
| २५८ | १ | भभूवतिः | भवभूतिः |
| " | ९ | कस्यचिदपि | कस्याश्चिदपि |
| " | १९ | दसेन | दासेन |
| " | " | पयितु | पयितुम्। |
| २६० | ३ | भबभतेः | भवभूतेः |
| " | ४ | विद्भान्तगतं | विद्भर्न्तर्गतं |
| २६१ | ५ | यात्कल | यत्किल |
| " | १४ | वहनि | बहूनि |

Registered Number A. 639.

ऋष्यङ्कः * ओ३म् * दीपमालाङ्कः

# उषा

( संस्कृतमासिकपत्रिका )

उषा अजीगर्भुवनानि विश्वा । ऋग्वेदे ।

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः ।
विगलतु जनतान्धकारलेशः, प्रसरतु देवगिरामुपाविशेषः ॥



कांगड़ी गुरुकुल [illegible] मुद्रिता. प्रकाशित.

* ओ३म् *

# उषा

( संस्कृत मासिक पत्रिका )


| द्वितीये वर्षे | * आश्विन एवं कार्त्तिकश्च *<br>स० १९७२ वि० | दशम एव<br>एकादशोऽङ्कः |
|---|---|---|




## भगवन्नमस्या ।

करुणावरुणा ऽऽलय पालय मां

सुखसार दयामय पाहि हरे ।

परमेश रमेश महेश विभो

भुवनेश निरामय पाहि हरे ॥

दुरितै रमितै रहितैः प्रसितं

पतितंसततं विषमै र्ग्रसितम् ।

अघनाशन मामघिनं भगवन्

भवतारण तारय पाहि हरे ॥

विषयात्मिकयामृगतृष्णिकया—

कुलितं तृषितं च भयानुधिकया ।

भवखेद हरां निज भक्ति सुधां

कृपया परिपायय पाहि हरे ॥

जननी जनको ऽपिममा ऽस्तिभवान्

विपदां हरणः शरणो ऽस्ति भवान् ।

अधुना तु विलोकयदीन दशा

मयि नाथ सनाथय पाहि हरे ।

———:o:———

# दयानन्दस्य कर्मयोगः

द्विविधं हि पन्थान माश्रयन्तो दृश्यन्ते प्रतिभावन्तः। केचित् कर्तव्य चिन्ता परायणाः जगति निज मनः संवेश्य धर्मानुसारि जीवन यापयन्ति, अपरे पुनः 'सङ्ग एव दुःख मूल' मिति सिद्धान्त मवधार्य लोकसम्बन्धान्परित्यज्य वनविहारमेव परम धर्मत्वेन स्वीकुर्वते। प्रयतन्ते ऽपि च तदनुकूल मेवा चरितुम्। पूर्वोहि कर्म योग मार्गः, पश्चिमश्च सन्यासमार्गः। इमावेव मार्गावुद्दिश्य भगवता कृष्णे न गीतायां समतिपादितम्।

सन्यासः कर्म योगश्च निः श्रेयस करावुभौ।
तयो स्तुकर्म सन्यासात्कर्मयोगो विशिष्यते।

भगवता वेदेनापि "कुर्वन्नेवेह कर्माणि जिजीविषे च्छतꣳसमाः इत्यादि श्रुत्या सन्यासापेक्षया कर्मयोगस्य प्राधान्य मुपदिष्टम्। न चेद् स्मानुष शरीरन्धारयता जनानां सम्भवति समुचितः कर्मसन्यासः। नास्ति शक्तिः कस्यापि देह धारिणो जीवतः सतः कर्म संग विहातुम्, यावदत्र देहे निरन्तरक्रियाकारिणो मनसः स्थितिरस्ति तावन्न सम्भवति देहिनो निरतिशयं नैष्कर्म्यम्। ये जना जगतो दुःख शोकादि वीचि पराहताः पराङ्मुखतामवाप्य कर्म-सन्यासमाश्रियन्ते, ते किल जीवनार्थं युक्ताद्भिर्यतस्तः पृष्ठमप्यदर्शय धावमानाः क्लीवपदवी मेवो पयान्ति। कर्मकर्तव्य' मित्येषएव वेदस्मृति सदाचार प्रतिपादितः परमोधर्मः।

अयं कर्म धर्मः काल वशा द्विस्मृति पथमापित आसीद् भारतवासिभिः। बौद्धधर्मस्य निर्वाण वादेन भारतवर्ष सकपन्तायकृत् मिथ्या सन्यासवादः। कर्मयोगान्तर मेव युज्यते कर्म सन्यासः। बौद्ध धर्मेण तु सकर्मयोग स्थानीय त्वेनो पदिष्टः। यस्मिन्प्रासादे समारोढव्यं, स एव यदिनिः श्रेणिका त्वेन व्यपदिश्येत, स समारोहणात्सम्भव पदवीं प्राप्नुयात्। फलत्वेन प्रतिपादितः कर्मसन्यासः बौद्धभिक्षुभिः सा-

धन त्वेनोपदिष्टः, ततएव च भारते नैष्कर्म्य विषवृक्षसमारोपणं जातम् । बौद्धमतानुयायिना राज्ञाऽशोकेन राजपद्वीमलं कुर्वता भिक्षुत्वमधारि, कर्म परायणतायै तिलाञ्जलिः प्रदत्तः, अतएव च प्रातः स्मरणीयस्य सम्राजश्चन्द्रगुप्तस्य प्रयत्नैः संस्थापितमद्यतनी-नांग्ल भारत साम्राज्यातिशायि साम्राज्यमपि वर्षेष्वेव दुर्दशामाप ।

बौद्ध धर्मेण मर्माहतः कर्मयोगः रामशङ्कराचार्य एव अद्वैत वादेन तथा कृपाणाहत आसीत्, यथा स परः सहस्रं समा अपि न शय्यां विहातुं शशाक। द्विगुण घातेन भारतवर्षं विहाय अन्यत्र गतएव कर्मयोगः प्रतीयते स्म । सहैव च जातीय जीवन मपि द्वीपान्तर गतमेव अलक्ष्यत । कर्मयोगेन सहैव सम्भवति जीवन स्थितिः । भारते ह्यारण्यभावः समजायत ।

जीवनस्यैकमात्राधारे विलीने, क्षणेनैव म्लेच्छवात्तूले स्ताड्यमानं दीनान्द शामवाप भारतं वर्षम् । क्षीणा स्वाधीनता, विशीर्णाधर्ममर्यादा विलुप्ता सम्पत् ; शून्यायितं यशसा, प्रध्यायितं वीर्येण, मन्दीभूतंच जीवनेन । किं बहुना आपत्तिशतेन विशीर्णोऽयं हत-भाग्य देशः परमामधोगतिम्प्राप ।

एतादृशे नैराश्यदायिनि काले भगवान्–दयामयः परमेष्ठी, क्षमा रूप माश्रित्य सर्वदुःख योग्य मपि भारत मुद्बोधयितु मिच्छुः प्राहिणोत् तेजस्विनींकामपिमूर्ति मत्रावतरीतुम् । भारतस्य पश्चिम भागे प्रादुर्बभूव कश्चित्कर्मयोगपरिपूत संस्कारः पवित्रात्मा । सच बाल्य-एव भगवत्कृपया तत्वज्ञान मवाप्य, मोक्ष वाञ्छया वना द्वनं गिरेश्च गिरिम्परिभ्रमन् सर्वशैल मान विलघ्य मलौकिक शोभाऽऽलयं हिमालयं प्राप्य तत्रदेहपातेन शरीर बन्धादात्मानं मोचयितु मैच्छत् । तस्मिन्काले च भगवत्प्रसादाल्लब्दात्मज्ञानम्प्राप्य,परोपकाराय निबद्ध सकंल्पः भूलोक मवततार । तत्र मथुरा पुर्यां न्निवसति विरजानन्द गुरौ चिरन्न्युष्य मुक्तामानिवशास्त्रयोगेन परिष्कृति संस्कार मुपययौ । विद्याऽभ्यास परिपूतान्तरात्मा च जगदुद्धार बद्ध परिकरो दयानन्दः मरीचिमालीरश्मिभिरिव निजसत्यो पदेशै र्भारते नव जीवन मुत्पाद-

यितु कस्यचिज्जन च कृतात्मना स्वप्रयत्नो विफलता मेति। अवश्यमेव स काले सुफल मुत्पादयति। ऋषे र्दयानन्दस्य धर्मो द्धारार्थकः प्रयत्नः सपुष्पः सफलश्च जगदु पकाराय वर्त्तते इति मन्ये।

कश्च तस्यो पदेशेषु प्रधान तमः? नूनं स कर्म योगो पदेश एव।

## 'कर्मैव कुरु त्वस्मात्त्वं कर्म ज्यायोह्य कर्मणः'

इत्येषा भगवदुक्तिरेव तस्मि न्महाप्रवर्तिनी बभूव। कर्म सिद्धान्त एव च तस्य परार्थ मयं जीवनं व्याचष्टे नैतं सिद्धान्तं विना सम्भव आसीत्कथमपि तस्याः परोपकार वृत्तेः, यया प्रेरितेन दयानन्देन निजदेहः परोद्धार यागे सानन्दमाहुतीकृतः। को ह्यकर्मयाजी तत्वज्ञान पयसा प्रक्षालितान्तःकरणोऽपि, योगमार्गपथिकोऽपि, निःस्पृहोऽपि, गत सर्वैषणोऽपिसन् पुनरस्मिन्दुःखवीचिपराहते जगति प्रविशेत्? अथवमीदृशो भारतीयः शान्त सुखावहां गिरिगुहामेव प्रवेष्ट मभिलषेत्। दयानन्देन तु कर्म योग मनुसरता परार्थ मतिना जगत्पाश प्रहार मार्गे निक्षिप्तः-नतु प्रवृत्तः। कर्म कारिणामपितं न कर्म बन्धनानि स्वाधीनता न्नेतुमपारयन्। एषएवच सत्यः कर्म योगः कर्म फलासंगमुक्त्वा यो जनः कर्म कुरुते, सएव शास्त्रविद्भिः कर्मयोगीति नाम्ना व्यवह्रियते।

भारतीय दयानन्दस्यायमेव पुण्य आदेशः। अयमेव च उपदेशः। बाल्ये सन्यासस्य, ज्ञानाभावे सन्यासदम्भस्य च स परम शत्रुरासीत्। एकं कर्मैव तस्याभिप्रेत मासीत्। तेनैवस परांगतिममन्यत। यदि अस्तिकश्चिदीदृशः पुण्यात्मा, योदयानन्दमनुसर्तु मिच्छति नूनन्तेनपरोपकारकर्मण्येव निजजीवनमति वाहनीयम्

———:०:———

# ऋषे विजयः

वादित्रघोषाग्रगजेन्द्रवृन्द, दुर्गर्वसङ्कर्षणवर्षणानाम् ।
जयन्ति वाचो निगमार्थ सारा:, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( २ )

वक्रोक्तिरम्याश्रितचारुसारा, रम्यच्छटालब्धजगत्प्रसारा: ।
जयन्ति वाचो निगमार्थ सारा:, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( ३ )

सदर्थसंलुप्ततमोनिमग्ननवप्रदीप प्रदवाङ्मयानाम् ।
जयन्ति वाचो निगमार्थ सारा:, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( ४ )

सदा सदानन्दकृतप्रसारा:, परेशभक्तिप्रवलाच्छसारा: ।
जयन्ति वाचो निगमार्थ सारा:, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( ५ )

लस द्विपत्तोत्तरदायकानां, विचित्रवाक्चित्र शिखण्डिनीनाम् ।
जयन्ति वाचो निगमार्थ सारा:, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( ६ )

अखण्डपाखण्डविदूषकानां, सदैकमान्यश्रुति माश्रितानाम् ।
जयन्ति वाचो निगमार्थ सारा:, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( ७ )

स्वभावसंयुक्तगुणक्रमेण, प्रकृष्टसन्मार्गप्रवर्तकानाम् ।
जयन्ति वाचो निगमार्थ सारा:, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( ८ )

विजृम्भितानेकमतप्रहन्तृ, प्रधान मङ्गीकृतवाक्प्रसाराः।
जयन्ति वाचो निगमार्थसाराः, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( ९ )

अपूर्वतेजःप्रसराश्रितानां, लसन्मुखाब्जश्रुतिहंसिकानाम्।
जयन्ति वाचो निगमार्थ साराः श्रीमद्दयानन्दसरस्वतीनाम् ॥

( १० )

निर्दम्भ मुज्जृम्भदनेक पद्य, प्रकृष्टपीयूषरसव्रजानाम्।
जयन्ति वाचो निगमार्थ साराः, श्रीमद्दयानन्दसरस्वतीनाम् ॥

( ११ )

सुरस्वतीनां सरसां कृतीनां, विचित्र चारुश्रवमाश्रितानाम्।
जयन्ति वाचो निगमार्थ साराः, श्रीमद्दयानन्दसरस्वतीनाम् ॥

" श्रीवत्सः "

——:o:——

# महर्षे राजनीतिनैपुण्यम्

इदानींतनाः देववाण्येक परायणाः वाराणसीवासिनः पण्डिताः प्रायशः व्यवहार ज्ञानशून्याः मन्यन्ते पाश्चात्यसेविभिः। सत्सत्यं स्व-स्व शास्त्रीय विषयैकपरतां विहाय ते नितान्तमितरज्ञानरिक्ताः भवन्ति। कूपमण्डूका इव ते स्वे स्वीयाभ्यसनीय शास्त्रा दन्यत् किमपि जानन्ति संसृतौ प्रजायमानं। परिशीलितास्वेव सरणिषु तेषां चङ्क्रमणं नत्वन्यतः। न ते जातु नूतन मार्गानुगामिनो भवन्ति। भास्करः प्रतीच्यामुदे तु सारमेतत् परं ते तामेव पुराणां सरणिमनुयान्ति। स्वीय मल्पमेव ज्ञानपल्वलमतिरिच्य अन्यस्थलगतानां सलिलानां विलुलितानि नते मनागपि बोद्धुं पारयन्ते, नापि च ज्ञातुं कामयन्ते नाम। तेषामेव निकेतनाधिष्ठानमतिबाह्य नते ईषदपि संसृतिविचेष्टितेनाभिज्ञतामावहन्ति. अद्याप्येवंभूतानां व्याकरणाध्ययनाध्यापन परिगलित वयसां वर्षीयसां सुकरमेव निदर्शनं येषां किल नितान्त मनवगतमिदं यद्भरतखण्डमिदमस्मदीयं पारतन्त्र्यपाशैर्निगडित मतितरामवनतिपरमेव। न चेदमपि तेषामनुभवपथमारोहति यदेभ्यः पाशेभ्यो मोक्षाय ऐक्यमालम्बनीयम् यद् नावश्यकानि जातिबन्धनानि श्लथयितव्यानि।

अस्तु अलमतिप्रसङ्गेन साम्प्रतं प्रकृतमनुसरामः। महर्षिणापि गुर्जरप्रान्ते ईदृशमेवैकं विप्रसदनं निजजन्मनालंकृतम्। तत्पितरावपि व्याकरणादिग्रन्थालोचनपरावास्ताम् न च लोकविलसितेषु क्षणमपि मनश्चक्रतुः। परमहो महर्षे प्रागल्भ्यमहो वैदग्ध्यमहो चातुर्यमहो सुदूरदर्शिता यदेतादृशेपि लोकाद् बहिरिवाधिष्ठिते निकेतने जन्म लब्ध्वा लोकाकारितेषु कर्णं निदधे, लोक संचलितेषु च मनश्चकार। लोकाभ्युदयमेव च स्वीयं परममुद्देश्यं मेने।

महर्षेरेवैष महिमा यत् संस्कृतग्रन्थेष्वेव निहितमतिरपि स्वोत्कर्षेण स्वसूक्ष्मेक्षिकया च संलक्षयितुं पारयामास पाश्चात्यानां कौटिल्य विलसितानि, तदानुगुण्येन च तदौपयिकानि साधनान्याविष्कर्त्तुम्। निदर्शनस्वरूपेण कियन्ति उदाहरणान्यत्र निदर्शयामि—

१. वैदिकधर्मप्रचाराय इतस्ततो देशाटनमाचरतो महर्षेरिदमु-
दन्तमेकदा कर्णसरणिमवतीर्णं यत्किलोदयपुर्या अधिराजा जयपुरा-
धिपतये उदयपुरदुर्गोपायनं प्रतिश्रुतमिति । अथ वृत्तमिदमाकर्ण्य
खिन्नमना महर्षिः उदयपुरपतिमुपेत्य मा स्वहितहानिमाचरेति तं स-
म्यगवबोधयामास, अथ च प्रतिज्ञावचनानि निवर्त्तयितुमिदमुपाय-
मबोधयत् यत्किल सर्वेऽपि राजपुत्राधिपतय एकत्र समाकारणीया
अथैवं गते तान् सकलानप्येवमादिदेश यदायाते हि भारताधिपती
दुर्गमिमं स्वायत्तीकर्तुं, न केवलं वयमेवाधिकारिणो ऽस्य दुर्गस्या-
पितु प्रत्येकं राजपुत्रतनयमिदमाश्रयते अतो न वयमिद मुपायनीकर्तुं
क्षमा इत्येवंरूपेण स प्रतिवचनं प्रतिपत्तव्यः । अस्यैवेयं सुभगा प
रिणतिर्यद् द्यापि तं दुर्गं वय मेवाधिकुर्मः ।

२. उदयपुराधिपतेः जयपुरेश्वरस्य च मिथो महन्मनोमालिन्यमासी-
त् । जयपुरस्य तद् दुर्गाधिपत्यमन्तरेण न मे रोषः प्रशममेष्यतीति उदय
पुरेशस्य प्रतिश्रुतमासीत् । महर्षिश्च इदं मिथः कलहमवेत्य तन्नपाक
र्तुं मिदं साधनमकलयाञ्चकार तेन काष्ठमयं दुर्गमेकं निर्माय प्रज्वालितं
तेनोदयपुरेशस्य वचनविघातोऽप्यपास्तः मिथः कलहोऽप्यपगतः ।

महर्षिरत्यन्तमावश्यकमिदं मेने यत्किल सर्वेऽपि भारतीया
अधिराजान एकामेव मालामालम्ब्य ऐक्यमीयुरिति नतरामद्यतनीना-
नां राजनीतिविशारदानां मवधेयपद्धतीमुपैति आवश्यकीयमिदंवृत्तं ।

३. सत्यार्थप्रकाशस्य दशमसमुल्लासतो महर्षेरमूल्यानि सारपूर्णानि
वचनानीमान्युद्धरामि ।

देशदेशान्तरेषु द्वीपद्वीपान्तरेषु आधिपत्यलाभमन्तरेण तत्र च वाणिज्य
व्यापारमनावहता न केनापि देशेन उन्नतिशिखरमारोढुं शक्यम् । वि-
देशीयैराधिपत्यंगते स्वदेशाय विदेशीयानां च व्यापार प्रसार वति
प्रदेशे न किल जात्वपि सुखमध्यवास्ते दुःखदारिद्र्यैरधिष्ठितोऽयं
नूनमहरहः दुरिताचरणानां सदनं भवति, एवमेव मोहमयी प्रान्तेषि
व्याख्यानं वितरता महर्षिणैव यथार्थं उपदिष्टः, यत्किल न यावत्
भारतीयाः स्वदेशीयं वस्त्रादिकमन्यञ्च शिल्पजं वस्तुजातं प्रयोक्ष्यन्ते
प्रकामं दुरधिगमं तावदुन्नतेर्मर्म

४-देशोन्नत्यैकपक्ष लक्ष्यस्तत्परः तच्चेष्टस्तन्मन एव महर्षिः श्यामजी कृष्ण वर्माणं विदेशेषु प्राहिणोत् यदयं विदेशीयाना मुन्नतिसाधनानि सूक्ष्मेक्षिकया समालोचयेदिति ।

शार्मण्यो ( जर्मन ) पाध्यायैः महर्षेः सम्बन्धमभिदधन्ति बहूनि किल पत्राणि सम्प्रत्येवास्माभिरुपगतानि । कानि साधनानि कानि च कारणान्युपजीव्य भवदीयेयमुन्नतिरित्येवं विध प्रश्नात्म कानि तानि पत्राणि । महर्षिः सम्यगिदमवबुबुधे यद्विघटनमेव भारतीयानामवनतेः कारणम् , संघटनमेव च समुन्नति शालीति । इदमुद्भाव्य सकलानपि भारतीयानेकेनैव सूत्रेणोद्ग्रथयितुं कामयमानेन महर्षिणा परोपकारिणीति नाम्ना सुविदिता परिषदेका संस्थापिता । यस्यां नृपतीनांनवकमानयितुं सफल श्रमोऽयमभवत् । इदं किलाधीश्वराणां संघटनपरं साधनम् । प्रजायाश्चैक्य सम्पदनाय महर्षिणा गोरक्षायाः प्रश्न असमत् समक्ष मुपस्थापितः, नतु धार्मिकं कारणेनापितु अर्थ संचयदृष्ट्या, यथा हिन्दूयवनानां मिथो विग्रहं न स्यादिति । अत्र किल महर्षेरपूर्वा पारदर्शिता आविर्भवति ।

आंग्लनियमानुसारं न किल भारतीयाधीश्वराः मिथः सम्मिलितुं क्षमन्त अनुज्ञामन्तरेणैव । परं नहि धर्मविषये आंग्लानां हस्ताक्षेप इति राज्याः उद्घोषणमनतिक्रम्य, सम्मेलनात्मक मेक मात्रं धर्म धुरमेव अद्यापि सुरक्षितं सम्प्राप्य, धार्मिकोन्नतिं समुल्लङ्घ्य नृपतेर्नवकमानयितुं चक्रमे । परं हन्त ! दौर्भाग्यं भारतीयानां यन्महर्षेः स्वर्गवासानन्तरं न कोपि राजनीत्यभिज्ञ स्तदीयां नीतिसरणिमनुययौ । तमेवानुयाता तदीया नीतिः ।

५-भाषैक्यमन्तरेण भारतीयानां संघटनं न केवलं सुदुर्लभमेवापि तु सुतरामसम्भवमिति सुपरीक्षितमासीन्महर्षेः सूक्ष्मेक्षिण्याः मतेः । इदमुपजीव्यैव च तेन निजमातृभाषां विहाय सुगमतरामार्यभाषामवलम्ब्य निजग्रन्थजातमपि सङ्कलितम् । अस्तु अलमतितरां पल्लविनेन मतिवर्य्येषु श्रीमत्सु परमिमान्यमृतमयानि महर्षेर्वचनानि समुद्धृत्यैव लेखमिमं परि समाप्तुमीहे ।

“ नूनमप्रतिमं स्वदेशीयमाधिपत्यं । मतमतान्तरीय मनोमालिन्य-शून्यं-स्वकीय परकीय विचार रहितं-प्रजासु पितृ वदाचरत् सुखा-वहमपि विदेशीयमाधिपत्य' न सुखावहमिति ”

महर्षिरेवैष यः खलु स्वाराज्यस्यापातरम्यं लक्ष्य मुद्घोषयामास महर्षिरेवैष यः किल भारतीयां दीनदशां दृष्ट्वा दुर्मर्षितमनाश्रु-धारां पातयामास ।

कृपामयस्यैवेयं पावनी तनुः यास्यै पुण्यभूम्यै निजप्राणान-प्यविगणित ददोति ।

॥ स जातो येन जातेन याति देशः समुन्नतिम् ॥

———:०:———

## ॥ आग्रहायणं श्राद्धम् ॥

समुपेते ह्याश्विनमासस्य कृष्णपक्षे पौराणिकमतावलम्बिनां सविशेषं स्मृतिपथमवतरन्ति तेषां मृताः पितरः । न केवलं तेतान् स्मरन्त्येवापितु तेषां निमित्तं ब्राह्मणान् भोजयन्त्यपि । इदमेव खल्वाग्रहायणं श्राद्धम् । वयं तावदित्थमत्र विषये विप्रतिपद्यामहे ।

न किल धर्मो नानुष्ठेय इति नो विवक्षितमपितु समाचरणीय एव धर्मं विधिरिति साभिनिवेशमास्माकीनो दुराग्रहः ।

परमिदमत्र न उल्लङ्घितं यद्धि न हि यस्मिन् कस्मिँश्चिदपि वचने श्रद्धेयम् । शरण्य मेव शरण्यम, अनुष्ठितव्य मेवानुष्ठेयम, श्रद्धेयमेव च श्रद्धेयम, नेतरत् किमपि । श्राद्धकार्येपि करणीयता सनातो परीक्षा ।

तत्रोपरितने विषये परमार्थतः किमनुष्ठातव्यमितीमं पदार्थं भोजनं ज्ञापयति:—

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित्<br>
पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ॥

॥ मनु . अ. ३ श्लो १४९ ॥

विश्रुतमेवात्र मनोरभिप्रेतं यद्दैवे यजन याजनादि कर्मणि न खलु ब्राह्मणः परीक्षामर्हति यतो यजन याजनमेव स्वतस्तद्योग्यताबोधनायालम् । परं पितृकार्ये तु नूनमसौ श्रोत्रियो भवेति परीक्षामर्हत्येवे । अद्यत्व तु अतो विपरीतमेव जनानामाचरितमवलोक्यते । न खलु पितृकार्ये श्राद्धे, श्रोत्रिया साम्प्रतं परीक्ष्यन्ते न वा तेषां सौजन्य मसौजन्यं वावगाह्यते ।

अन्यच्च

तथानृचे हविर्दत्त्वा न दाता लभते फलम् ॥

॥ मनु० अ० ३ श्लो० १४२ ॥

अत्र टीकाकृत् कुल्लूक भट्टोप्येवमुल्लिखति, अविदुषे हविर्दत्त्वा दात
श्राद्धदानफलं न प्राप्नोतीति नियत मित्थमनीतिनाः परीक्षितव्याः श्राद्ध
भोजिनः । सुपरीक्ष्य चावश्यं, तेषां श्रोत्रियत्वस्य स्थिरतां सम्पा
तेषु श्रद्धाविधिरनुष्ठेया । तदानीमेव च ते भोजनीयतां विन्दन्ति । ए
मेव हि दाता श्राद्धदानफलं भजते । इत्थमेव तत्र पितरस्तृप्यन्ति
तदमस्ति विवक्षितम् ।

यत्र तावदवेदज्ञो मन्वादेशात्तु स्वार्द ब्राह्मणत्वमर्हति मनुमना
त्थ अवेदज्ञस्यापि ब्राह्मणत्वं चेदङ्गीक्रियेतापि तथापि निगमागम
नभिज्ञतया श्रोत्रियत्वमनधिगच्छन् न स जातुचिदपि पित्र्ये कर्म
श्राद्धे भोजनभाक् । इति वेदार्थ वेत्तारः श्रोत्रिया एव श्राद्धवि
भोजनीनी त्युपपन्नम् ॥

श्राद्ध कालः—

आश्विन मासस्य कृष्णपक्ष एव साम्प्रतं नैरन्तर्येण श्राद्धविधेरा
णवमलोक्यते । परं न तु वेदास्तदनुकूलाः स्मृतयोवा एष एव श्रा
समय इति निर्दिशन्तोऽवलोक्यन्ते । अपिच ।महाभारते वनपर्वणि
धिष्ठिर यक्षसंवादेपादमेव निर्णीतमवलोकयामोयत्किं यस्मिन्नपि स
श्रोत्रियोवेदविद्ब्राह्मणोगृहमुपपद्यते श्राद्धकाल एव स एव इतिम
मते मनोर्वचनानामप्यवमानना सम्भवति । यतो मनुरुपरितनं वि
वदति मनुना । आश्विनमासस्य कृष्णपक्ष एव श्राद्धविधिरायोज

इति न मधुना कश्चिदप्युद्गीतमवलोकयामः। अतो यदापि वेदविदः श्रोत्रियाः समुपगच्छेयुः श्राद्धकाल एव स इति निर्णीतम् ॥

श्राद्धविधेः जीवितेषूपचारो न तु मृतेषुः—

महीदानीमपि विवादास्पदमिदं यद्विधेरस्य जीवितेषूपचारो न तु मृतेषु। यमलोकादिस्थानविशेषानामभावात् पितृणांनिवासस्थानमधि संशयास्पदमनिश्चितं असत्त्वेनप्रतीयमानं,न केवलमेवं प्रतीयत एवा-पितु नास्त्येव पितृणां निवासस्थानम्। अथ मन्यते चेदियमास्मा की-मोहदला— अथ कोपि सन्ततिविहीनो बालः किशोरवयस्येव मृत्यु-मवाप्नुयात् तर्हि तस्य दुर्गतिं सम्भाव्य तत्पित्रैव स्वसुतस्य श्राद्ध-विधिरायोजनीयो भवति। परं श्राद्धं नाम पित्र्यं कर्म पितृष्वेव त-दुपचारः समीचीनो नान्यत्र। तत्किं तस्य पुत्रस्यापि पितृत्वमङ्गीक्रि-यते यत्तन्निमित्तं श्राद्धविधिरायोज्यत इति। नहि मृतेषूपपद्यते विधे-रस्योपचारः। जीवितानामेव कृते विधिरेष प्रयुज्यत इतिदिक् ॥

पितरः के !—

शतपथे शिशिर हेमन्तशरदां ऋतु त्रयाणां पितृशब्देन संज्ञानम्। परमस्माभिः श्रोत्रिये ज्ञानसम्पन्ने विप्रे पितृशब्द विनियोगः क्रियते। उभयत्रापि विनियोगः समञ्जस एव। सामञ्जस्यं चेत्थम्।

श्रीमता महीधराचार्येण पण्डितप्रवरेण 'ये पितरः पालकाः सन्ति तेभ्यः स्वधास्तु' इति यजुषो द्वितीयाध्यायस्य सप्तमे मन्त्रे पितृश-ब्दस्य वाच्यः पालक इति समुल्लिखितम्। ऋतवोऽपि नः पालयन्ति, विपश्चितोपि नः परिपोषयन्ति, जन्मदातारोपि पालनकर्त्तारो भ-वन्तीति ऋतवोपि पितृशब्दवाच्याः, ज्ञानिनोप्येवं, मातृपितृमदयोपि नान्यथा।

तर्पणतत्त्वं—

एते हि उपरितनाः पितृशब्द वाच्याः ज्ञानिनो विद्यादिभिर्जनानां सं-रक्षस कर्त्तारः । अतस्ते यत्नप्रदैः सात्त्विकैश्च दुग्धादिभिः पदा-सन्तर्पणीयाः, स्तानानश्च तेषां शिक्षामयै र्वचनैराप्यायितव्याः ।

मनुनापि

स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैवहि ।

अ० ३ श्लो० १३२ ॥

इत्यस्मिन् पद्य उक्ताशय एवोपबृंहितः । यत् पित्र्ये कर्म्मणि गृहस्थः समुपेतान् ज्ञानिनः समधीतानि धर्मशास्त्राणि श्रावयेत् यथा ते तानि विशदीकृत्य बोधयेयुः ।

यथा चापामरं शास्त्रार्थतत्त्वं प्रकाशितं स्यात् येन जनतान्धकारो विलीयेत, सर्वेऽपि सत्पथि प्रवर्त्तेयुरित्येव श्राद्ध विधेः परमः प्रकृष्ट एव श्राद्धतर्पणानामाशयः, इदमुदिश्यैव च ते प्रवृत्ताः । इदमेव च पञ्चमहा यज्ञाना मन्यतमः पितृयज्ञः ॥

—:o:—

## ॥ कुलाद्रिमुक्तस्य वियोगवार्त्ता ॥

( १ )

पश्यामि तान्वागधिदेवतायाः,
सखीनुदारस्मितलासितानाम् ।
रसेन वर्षादिवसान्निषिक्तान्,
ममाऽपिनेत्राम्बुभरैर्निषिक्तान् ॥

सौदामिनीनां ज्वलदट्टहासे,
पुष्पस्मितानां सुरभौ विलासे ।
मयूरलोके स्तुवदम्बुवाहे,
वनस्थली स्मेरहरित्प्रवाहे ॥

मुग्धैर्भरधिः सितभक्तिभाव,-
मूर्ध्वंगतैर्यत्कृषीवलानाम् ।
निमेषहीनै र्नयनैर्निपीते,
वात्सल्यसारे करुणामयस्य ॥

अनेकरूपेष्वविभिन्नरूपो,
विभाव्यमानो नयने निमील्य ।
आनन्दरूपः परमस्य पुंसो,
यदा स कोऽप्युल्लसतिस्म सर्गः ॥

तुषारनद्याःवलितानितम्बे,
समुज्वलत्वात्स्फुटलीनभागा ।

आपादि येषु प्रतिबिम्बभावं,

श्यामायमानातटवृक्षराजिः ॥

( २ )

धन्या महीयं मधुरै रपाङ्गै,

रचिन्त्यलीला कुशलस्य धातुः ।

उन्मज्जतायच्चदिगन्तमध्या,

ल्लिप्ते मुहूरं नवनीरदेन ॥

स्निग्धेन्द्रनीलद्युतिजैश्चभासि,

पश्य प्रतीची गगनाम्बरेऽस्मिन् ।

बालार्क चामीकरचारुभासा,

स्नातेन्द्रचापेनविचुम्ब्यमाना ॥

आनर्त्ति रम्यावनराजिलक्ष्मीः,

स्वतूलिकानां चरमैर्विलासैः ।

( ३ )

भारातियोगाज्जलसीकराणां,

संक्रामता गन्धवहेन मन्दम् ।

स्नातानि मीलन्ति विलोचनानि,

हृदासहानुत्यति रोमराजिः ॥

इयं [illegible]र चुम्बतिहन्तदोला,

[illegible]मेण शाखे शिरसा पदेन ।

अधः स्थितेनाऽहमहम्परेण,
प्रतीक्ष्यमाणा, वटुसङ्कटेन ॥
अहो कथं श्रान्तसुखानुसुप्तः,
संवीज्यमानः पवनेन यामि ।
कथं च रोमाणि विनर्त्तयन्ती,
तनौविसर्पत्युपहासिगुद्गुदी ॥
धन्या अहो ये गतचिन्त्यमेवं,
वयस्यमध्ये विनिराशतायाः ।
अत्रैव लोकेऽनुभवन्तिहन्त,
क्षणं सुखं व्योमचरैकलभ्यम् ॥
वत्सा इवैतेवटवः प्रयान्ति,
कण्ठावलम्बत्पटखण्डवासनाः ।
स्वैरं समास्वादयितुं फलानि,
सासूयशाखामृगलोकितानि ॥
अहो बटूनां तरणे पटूनां,
परस्परस्पर्धिकथारतानाम् ॥
यदा यथोदेति नदीप्रपूर,
स्तया तथा नृत्यति मोदपूरः ॥

"मरालः"

——:०:——

## "महर्षिः दयानन्दोब्रह्मचर्यञ्च

महाप्रतापशालिनः सहस्रकरमालिन इव महर्षेर्दयानन्दस्याद्य न विद्यते काचिदावश्यकता परिचय प्रदानस्य। संभवत्येतद्यत्कतिचन जनास्तद्विषये न बहु जानंतु परंतु तदीय प्रभावेण सुप्रभावित एव सकलोऽपि लोक इति निर्विवादमेव। भारतवर्षस्य तु दयानन्देन सुमहान् उपकारः कृत इति नाऽतिरोहितं मतिमताम्।

उन्नत्यै देशस्य, सुधाराय जाते, रुद्धाराय धर्मस्य च तत्प्रयत्नः प्रत्यक्षमेव प्रेक्षावताम्। तेन हि देशे चिरात्प्रचरिताः कुरीतयः समुत्सार्य वैदिक्यः प्रणालयः प्रचालिताः याभिर्म्रियमाणस्य भारतस्य शरीरे पुनरपि जीवनसंचारः सञ्जातः। तेन पश्यतामखिल प्रतिपक्षिणां क्षणेनैव सर्वतः परिवर्तिता देश दशा। क्षीणीय मोहमदीयादीनां भीषणभुज पञ्जर पतिताऽपि पुनरुद्धृतेव आर्यजातिः। प्रकाशितं च नानाऽनार्षग्रन्थ मिथ्या विश्वासमय घनान्धकारपरम्पराऽन्तर्हितं वैदिकं ज्योतिः।

एतत्सर्वं सम्पादयितुं यत्स प्राभवत्तन्मन्ये तद्ब्रह्मचर्यस्यैवाऽमितो महिमेति। यद्यपि तदीयाऽनवद्याविद्याऽप्रतिमा प्रतिभा कुशाग्रा च बुद्धिः सर्वामपि सर्वकालंतत्साहाय्यतत्परा आसन् तथापि धार्मिके सामाजिके च संसारे तस्य तादृशस्य महत्त्वस्य, आश्चर्य विषयस्य साफल्यस्य च रहस्य मेकमात्रं ब्रह्मचर्य्य मेव तस्याजिनार्यं प्राण मनुत्तमं मित्रं चासीन्मन्येऽहमिति।

अतएवाऽयं महाभागः प्रायेण कथयतिस्मयत् "यदि दया-
नन्दः किमप्यभिमन्यते तदेतदेव यदस्य मनसि वचसिकर्मणि ना
कदापिकाप्यपवित्रता प्रवेष्टुं नाऽशकतेति । आदित्यो बालब्रह्मचा-
रीवाऽसीद्दयानन्द इति ब्रह्मचर्यशक्तिरेव तस्मिन्नासीद्ययायुग-
पदेव युगः परिवर्तितो भारते तेन ।

ब्रह्मचर्यमन्तरेण भारतसन्ततिः सन्ततं दीनाक्षीणा बल-
बुद्धिविहीनाश्च रसातलं प्रवेशमाश्रयितुमासीत् यदाऽस्य एव दीनो-
द्धरणोचितेन, परमकारुणिकेन परमात्मना दयामयो दयानन्द स्तस्य
त्राणाय जगती तलेऽवतारितः ।

तेन भारतभाग्यवशादिवैव समागतेन, आर्यजाति आर्य धर्म आर्य
देशोपकारायैवगृहीतजनुषा महर्षिणा प्रदर्शितोमहान् महिमा मही-
मण्डले ब्रह्मचर्यस्य । विशदी कृताश्च ब्रह्मचर्यव्रत धारणस्य तत्परि-
पालनस्य च सुदुर्लभालाभा निजेनैवोदाहरणेन ।

ऋषे दयानन्दस्य विद्यादि विषये कदाचित् कोऽपि विपक्षी किम-
पि कामं माक्षिपतु नाम परन्तु तस्याऽजस्र मस्खलितं ब्रह्मचर्यन्तु
तत्सपक्षाः प्रतिपक्षा वा सर्वेऽपि मुक्तकण्ठ मुररी कुर्वन्त्येव । अयं
ब्रह्मचर्यस्यैव सुमहा प्रशस्तस्य विलक्षणः प्रभूतश्चासीत् प्रभावो
यत्स प्राभवत्कर्त्तुं वेदभाष्यम् । तस्य सजव धावमान हयचतुष्टय यो-
जितस्यरथस्यलीलयैवाऽवरोधोऽत्र प्रत्यक्ष प्रमाणं सत्यः साक्षीचा-
वर्त्तते ।

अस्यप्रसङ्गस्याऽऽधारेणैव अपनीत सकललोकमल्लबलाऽवलेपो
दिगङ्गनागणगीयमान चारुकीर्त्तिः भारत मुखोज्ज्वलकरणैक नूत्नरत्नं
साम्प्रतिकोभीमो ब्रह्मचारी राममूर्त्ति र्व्याहरति यदहमिमं दयानन्दो
ऽस्मदपेक्षया स्तोकात्स्तोकं पञ्चकृत्वोऽधिकं बलशाल्यासीत् ।
प्रत्यहमष्टा दश घण्टाः पर्यन्तं कार्यंकृत्वाऽपि स्वास्थ्य सम्पन्ना ब्रह्म-

चर्य्येण एव जनभवितुमर्हति । तस्य साक्षाद्ब्रह्मचर्य्यावतारस्य पुरुष प्रमाणो देहोदग्र यच्चन्द्र मण्डलं विस्तृतं सरसी रुहं इव च सरल तेजस्विनी लोचने सर्वदा ब्रह्मचर्य्य मिवैव समुपदिशन्ति स्म ।

तस्य तिरस्कृत सिंहनादोगम्भीरः कण्ठध्वनि, क्षोभः साहसो निरुपमा निर्भयता क्षमोपमा क्षमा नित्य सत्य व्रतत्वादयः सर्वेऽपि गुणा ब्रह्मचर्य्याश्रयेणैव समुल्लसन्तिस्म ।

इत्यधिगतब्रह्मचर्य्यमहन्महिमामहर्षिरेतएव केवलं बालविवाहं प्रतिषिध्य ब्रह्मचर्यस्य पुनरुज्जीवनायगुरुकुलशिक्षाप्रणाली चिरकालस्लुप्तां समुपादिशत् यत्र न्यूनान्न्यूनं पञ्चविंशति वर्षपर्यन्तं प्राचीन रीत्यानुसारं विद्याभ्यसन तत्परा वर्णिनो ब्रह्मचर्य्यं व्रतं पालयेयुरिति यतोहि ब्रह्मचर्यस्य श्रैष्ठ्यप्रति पादन विषये वेदेष्वपि बहुशः

समुपदिष्टम्-यथा-"पृथक् सर्वे प्राजापत्याः, प्राणानात्मासु बिभ्रति ।
"तान्त्सर्वान् ब्रह्मरक्षति ब्रह्मचारिण्या भृतम्"

"ब्रह्मचर्येणतमसादेवामृत्युमुपाघ्नत । इन्द्रोह ब्रह्मचर्येण देवेभ्यः स्वराभरत" "ब्रह्मचर्य्येणतपसा राजाराष्ट्रं विरक्षति" इत्याद्यन्यत्राऽपि "ब्रह्मचर्य्य मायुष्यकारणम्" चरके "ब्रह्मचारी न काञ्चनार्त्तिमृच्छति" शतपथे "ब्रह्मचर्य्येण वैलोकान्जयन्ति परमर्षय" "ब्रह्मचर्य्य दहेद्राजन् सर्वं पापान्युपासितम्" महाभारते इत्यादि । ऋषिदयानन्देन स्वयमपि सत्यार्थप्रकाशे वर्णितंयत् "केवलं सएवैकः सर्वेभ्यो रोगेभ्यो विमुक्तः सुखी सौभाग्यवान् समृद्धश्चभवति यो ब्रह्मचर्य्यं धारयति पालयति च" ब्रह्मचर्य स्यैव बलेन बालब्रह्मचारी भीष्म स्तावान् प्रतापी चतुः शतवर्षात्मक मायुरवाप । दयान्देनाऽपि पराजि तोयमराजः ॥

भारत वर्षः सर्वशिल्पानां विज्ञानानां च सदनभूतमासी यदाऽत्र ब्रह्मचारिणोविचरान्तिस्म । परन्त्वद्यत्वे ब्रह्मचारिणामभाव एवाऽस्माकमधः पतनस्य प्रधानं कारणम् । अस्माकं प्राचीनाः काननिवा

मिमः परमर्षय एव मनुष्यमात्रस्योन्नत्या आदर्शा आसन्। प्रश्नोपनिषदि— "यथा सुकेशा भारद्वाजादयो ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः। तान् ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान् पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति।

**सत्यं ब्रह्मचर्यं चैव केवलं सर्वमपि पूरयितुं पार्यते।**

एकेन ब्रह्मचारिणा दयानन्देन लोकस्य तावान् सुमहानुपकारः कृतः शेषमपि कोपि ब्रह्मचारी केवलं ब्रह्मचर्येण च कर्तुं मर्हतीति। अयमेव ऋषीणां परमोपदेशः।

—:०:—

# विजयाया विजय सन्देशः

आगता निर्गता चापि भगवती विजया। चिरात्राय समागतास्मीति न मे प्रोषितायाः रिक्तहस्ताया गृहाभिगमनं शोभनमिति शिष्टाचार मर्यादा मनतिपातयन्ती किमपि सन्देशजात मुपायनीकर्तु मनीतवती। तच्च कल्याणेप्सुभि गुरुजन वाक्यानुरोधादात्मीय जन वाक्यानुरोधाद्वा स्वहितैषया वा श्रोत्रविषयी करिष्यत इति आशास्यते। एवं किल विजया सन्दिदेश---

विजयावसरोऽयम्। अस्मिन्नहनि गुण ग्रामाभिरामो रामो मार्गशिलशालयये सागंवं दशास्यं पराभूय विजयश्रियं लेभे। रावण प्रमुखै रसुरै रामस्य प्रेयसी सीताऽपाहियत। सीताऽपहरण मासीद्रामस्य विषाद हेतुः। अद्य हि असुरचक्रं मुक्त्वा सीतो द्धरणं चकार रामः।

विजया विजयमेव सन्दिशति, यूयमपि विजयिनःस्यात। युष्माकं सीता विकल रामवदाकुला दुःखिताश्चस्थ। विषाद कारण नाशाय तदुच्छेदाय प्रसादासादनाय च यतमाना भवत।

काम क्रोधादिभिः स्वार्थ पक्षपातादि भिश्चासुरै रन्धीकृता युष्माकं प्रज्ञा। अपहृता क्रोधादिभि रसुरैरात्मरूपिणो रामस्य प्रज्ञा रूपिणी सीता। आत्मनोऽन्धस्य यष्टिकेवावलम्बनं प्रज्ञा तामपश्यन् शुचामम्भोधौ मग्नो विवेक विकलो बभूव।

यष्टिकां समाप्याधः पदं पदे स्खलन् किं कर्तव्यतायां विमूढो। प्रज्ञाऽनभिज्ञ आत्मा ततोऽप्यधिकं भवति विपद्‌ग्रस्तपदम्। अ-यमेव युष्माकं रामान्वयजानां भारतीयानामापदां हेतुः त्रिवि-धाधिव्याधिकारणं परिचिन्वन्तोऽकर्मण्यतां हित्वा कर्मपराः सन्तो रामवदसुरचक्रं परास्यात्मीयां सीतामुद्धृत्य विजयिनः स्यात। यो व्यक्तीणो रामः सीतामुपाश्लिष्य परां निर्वृतिमुपलप्स्यते। विजयिन एव विजयोत्सवे ऽधिक्रियन्ते न विजिताः।

क्षणं निरीक्ष्यताम्, दीपमालिकाया दवीयसी मन्दं मन्दं प्र-ज्वलन्ती द्युतिमती आलोक शिखा शनैः शनै रिव एवोपसर्पति अहो! मास्य मालोकज्वालाऽभितो रश्मीन् विकरन्ती। साक्षान्मेयं कल्याणी सौहृदमयी दिव्याऽऽलोका दीपमालिका। अद्य सीता-सहितस्य विजयिनो रामस्य भविष्यति राज्याभिषेचनम्। अहो मङ्गलात्सवोऽयम्।

किं त्वमपि रामोऽसि? किं असुरचक्रं विजित्योद्धृता त्वया स्वकीया जानकी? उद्धृता चेत्, ध्रुवं रामोऽसि, अरिन्दमोऽसि, राज्याभिषेकमर्हसि।

भो राम (अन्तरात्मन्) सीता (प्रज्ञा) द्वितीयो देहरूपि-णी मिमांसाकेत ध्रुवं यावज्जीवं धर्मेणानुशाधि। आत्मनैव राज्ये ऽभिषिक्तोऽसि, नान्यो भवन्तमभिषेचयिष्यति। त्वं रामोऽसि,

राजा ऽसि, उत्खातं त्वयाऽरिमण्डलम्, नास्ति ते कापि कापि भीतिः, निश्शङ्कं परिपालय वसुन्धरामित्येव विजयायाः सन्देश आशीश्च।

सन्देशहरः

---

# श्रीरामस्य वनात्प्रत्यावर्त्तनम्

( १ )

निहत्य सर्वान् समरे सुरारीन्वनान्निवृत्तो रघुवंशकेतुः ।
अयोध्यतीत्युत्कलिकाऽऽकुलाऽभूत्परं रघूणांकुलराजधानी

( २ )

सा सर्वतः पुष्पविलोचनानि निशा तुषाराम्बुकणैः प्रमृज्य ।
तदातदालोकन कांक्षयेव सहस्रनेत्रा सुतरां चकासे ॥

( ३ )

अहं किल प्रत्यहमेव रात्रौ गवाक्षमार्गे निभृतं प्रविष्टः ।
चराम्यतश्चौर इवातिभीतो नियामकादन्तरगात्सिताशुः ॥

( ४ )

निशाचराणामयमन्तकोस्य स्थातुं न युक्तं पुरतो ममेति ।
निशाऽपि भीतेव ततो निशान्ते शान्ते विदद्रेऽकचिद्रिकुक्षौ ॥

( ५ )

ममान्वयस्याय मनन्तकीर्तिप्रदः समुत्तीर्य्यपरां प्रतिज्ञाम् ।
अद्याऽपिकुत्रेतिरविर्दिदृक्षु श्चिक्षेपचक्षुः सकलासु दिक्षु ॥

( ६ )

चिरात्क्षितीशेक्षण कांक्षिणीनां कुलाङ्ग नानांललितैः कटाक्षैः ।
चिक्रीडुरर्कस्य मरीचिमाला गवाक्ष जालेषुमिथो मिलन्त्यः ॥

( ७ )

सुतंवियोगादनुशोचयन्त्या रामस्य मातुः पुरतः प्रभाते ।
रसालशाखा मधिरुह्यकाकी चुकूजकिञ्चित्सधवाऽऽशुभाति ॥

( ८ )

प्रभातवातस्य तदानुकूल्याद्दिशां प्रसादस्य सुलक्षणाच्च ।
पौरैः पुरस्तात्प्रियदर्शनस्य सद्यः पुनर्दर्शनमन्वमानि ॥

( ९ )

नात्राऽसिधार व्रतमास्थितस्य तदाजटाचीरधरस्य भिक्षोः ।
पस्पन्द चक्षुर्भरतस्य सव्येतरं किमप्यस्य शिवं निवेद्य ॥

( १० )

सलक्षणज्ञः शुभलक्षणं तद् आलक्ष्य रामस्य सलक्ष्मणस्य ।
प्रसादमात्मान्यथभूयमानं विवेद भाग्यादवधेः समाप्तौ ॥

( ११ )

कदाऽहमात्मानमिहाग्रजस्य पदारविन्दे भ्रमरायमानम् ।
विलोकयामीतिकृताञ्जलिः सन् वरं वराणां वरदं ययाचे ॥

( ११ )

ततः समुत्थाय यदा पुरस्ताच्चकार किञ्चित्किलदृष्टि पातम् ।
स विप्ररूपं विनतं युवानं कृताञ्जलिं तत्र ददर्श कञ्चित् ॥

( १२ )

हे विप्रकस्त्वं कुतआगतासि किं नाम किं धाम तवाऽस्तिचेति ।
प्रयोजनं वा गमनस्यकिं ते भद्रब्रवीहीति तमन्वयुङ्क्त ॥

( १३ )

अमुं जनं रामपदारविन्दानुगं महात्मन् सुतमञ्जनायाः ।
नाम्नाहनूमन्त मवेहिचेति प्रियं प्रियाणामुदतारितेन ॥

( १४ )

सोऽहं स्वस देश निवेदनाय भ्रातुप्रियेणायं भवत्सकाशम् ।
सलक्ष्मणेन महितोऽस्म्ययोध्यां सीतासखेन स्वयमेव दूतः ॥

( १५ )

व्यापाद्य संख्ये सच रावणादीनुत्पाद्य सद्यश्च सुखं सुराणाम् ।
विमानमारुह्य च पुष्पकाऽऽरूप मायात्ययोध्याभिमुखं सुखेन ॥

( १६ )

इतीरयित्वा स तदाव्यरंसीद् भावं बुभुत्सुर्हृदयस्य तस्य ।
हर्ष प्रकार्षीद् भरतोऽपिवाप्प मुत्सृज्यतत्तं भृशमालिलिङ्ग ॥

( १७ )

ततो यथायोग्यविधिं विधाय वाष्पादियोगादवरुद्धकण्ठौ।
उभौ हनूमान्रघुनाथमन्योऽन्वरोधमेतत्कथितुं प्रयातौ ॥

( १८ )

विज्ञाय वृत्तान्तमिमं तु रामः प्रीतोऽभ्ययोध्यं नभसा प्रतस्थे।
परन्तु पौराः पथिनेतुमेनं पद्भ्यामरण्याऽभिमुखा बभूवुः ॥

( २० )

निशम्यवाचं भरतस्यतावत् स्रवत्सुधाऽऽसार समान साराम्।
उभौ जनन्यौ नवजीवनानि नद्याविवप्रापतुरातपान्ते ॥

( २१ )

ततःक्षणेनैवनवःक्षणैः सातूर्य्यस्वनैःमंङ्गलगीतिमिश्रैः।
स्फुरत्पताका यदितोऽमराणां पुरीव साकेतपुरीरराज ॥

( २२ )

ततो विमानादवतीर्य्यवृद्धान् प्रणम्य सर्वैः सखिभिः समेतः।
तां प्राविशत्प्राग्रहरोरघूणां प्रसन्न पौरैरभिनन्द्यमानः ॥

——:(※):——

# सुधारको दयानन्दर्षिः

यदि वयं क्षणमक्षिविक्षेपमस्मिन्भारते वर्षे विदध्मस्तदा तत्र तत्र विविधसुधारान् सुधारकांश्चावलोकयाम। यथा क्वचित् पाठशालाः स्थाप्यन्ते, क्वचिदनाथालयाः गोशालाश्च। क्वचित् पुरातन ब्रह्मचर्य्य परिपालनप्रणाल्याः पुनरुज्जीवनाय गुरुकुलादीनां संस्थापना दृश्यते क्वचिदृषिकुलाचार्य्य कुलादीनाञ्च। क्वचिद्धिन्दीसाहित्यसम्मेलनं सरस्वतीसम्मेलनं जातीयसम्मेलनञ्च नयनपथातिथिर्भवति। क्वचिद्धर्म्मोपदेशकाः वेदामृतं पाययन्ति। क्वचिच्च गायकाः परमेश्वरं सस्वरमुपस्तुवन्तीत्यादीनि विविधानि कार्य्याणि भारतवर्षदशासुधारधिया क्रियमाणानि दरीदृश्यन्ते।

अथेदानीं निवार्य्यतां निजाक्षिवाजिनी क्षणमाधुनिककालात्, प्रक्षिप्यताञ्च षष्टिवर्ष पूर्वतरे कालक्षेत्रे दृश्यताञ्च कीदृशी तदानीन्तना भारतदशा तत्र न कुत्रापि पूर्वलिखितानां सुधाराणां गन्धोऽपि संप्राप्यते भवद्भिरिति निःशङ्कं वयं ब्रूमः। साम्प्रतमस्ति किञ्चिद् गभीरं विचारणीयं यत् कस्मान्नाम दयामयात्सुधास्रोतस इमाः सुधारधाराः षष्टिवर्षमात्रं प्रचलिता इति।

अथ तज्ज्ञानाय कामं निमील्यतां निजाक्षीणि पिधीयताञ्च कर्णपुटानि परं परिह्रियताञ्च हृदयात्पक्षपातपङ्कलेशस्तदा गमिष्यति भवतामक्षिणां समक्षं स्वयमेव कश्चित्तिरस्कृतभास्करप्रभः, ज्योतिःस्वरूपो यद् गभीरसुधावर्षिनादानुनादेन च पर्य्याक्रान्तानि भविष्यन्ति भवतां कर्णपुटानि, नूनं ज्ञायताम् स एवास्ति

दयामय आनन्दस्वरूपः सर्वेषामेषां सुधाराणां कर्त्ता श्रीमान् दयानन्दाभिधेयोमहर्षिः येन केवलं भारतसुधाराय जन्मग्रहण-मकारि। श्रीमता दयानन्दस्वामिना के के सुधारा भारतोन्नत्यै कृता इति तेषां गणना स्वशक्त्या कर्त्तु परं मुख्यसुधाराणां दि-ग्दर्शनमत्र प्रदर्श्यते।

(१) तत्र तत्कृतसुधाराणाम्मूर्धन्यभूत स्सुधारो ब्रह्मचर्य्य-प्रणाल्याः पुनरुज्जीवनं विद्यते। यस्य हि नाम ब्रह्मचर्य्यस्य वि-लोपादद्यावधि भारतमिदं नितान्त निम्नगर्त्त तलपतितो विद्यते। अधुना च ब्रह्मचर्य्य परिपालनाय संस्थापितानि गुरुकुलानि त-स्यैवोपकार फलानीति स्फुटं दृश्यन्त एव। तेन हि नाम मातृ-भूमि सुपुत्रेण साम्प्रत भारतीयानां मनस्सु ब्रह्मचर्य्यविद्युत्सं चा-रिता, समुत्सारिता च बालविवाहादीनां कुरीतीनां कण्टक संहतिः

अहह कोऽहि नायैतादृशोऽस्ति मनुष्यः, यस्य नाम प्रस्तर-मयमपि मानसं विधवानां सततं प्रस्नवदस्रुसलिलधाराभिर्न खलीभवेत् तासां तारस्वरा क्रन्दनैश्च कर्णपुटन्न खण्डयेत्। एतादृश्यवस्थायामपि कोऽहि नाम वीर स्तं दयामयदन्तग तासां शमय प्रश्रिणात् निजकर किसल यैश्च तासा न्त्वयत्। विधवानिवाहरीति प्रचालनेन च सर्व दुःखजात क्षमा शयत्।

(२) महर्षे द्वितीयो मुख्यस्सुधारो विद्या प्रचारस्य विद्यते तेन सर्वविद्यानिधान भूतानांचतुर्णां वेदानामध्यानपद्धतिः प्र-चारिता। अपि महर्षि प्रणीतानाञ्च स्मृतीनां प्रचारः कृतः। वेदानां भाष्यं कृतम्। वेदाङ्गानांश्च सर्वसाधारण जनता हिताय

र्य्यभाषाभ्यामनुवादः कृतः। सर्वशास्त्राणां सारभूतश्च सत्यार्थ-प्रकाशनामको ग्रन्थस्समुपनिबद्धः। तथा च पाठशालादीनां सं-स्थापनेनार्षग्रन्थानामध्ययनं क्रियात्मकतया प्रचारितम्। साम्प्रतञ्च तस्यैव केवलं महर्षेः प्रभावेण वयमिदानीं गुरुकुलवासिनश्छात्राः वेदशास्त्राण्यधीमः।

( ३ ) तेनैव श्रीमता दयानन्देन भारते जातीयताप्रचारः कृतः, इति तस्य तृतीयो मुख्य स्सुधारो विद्यते। वैदिकधर्म-ज्योतिः प्रशिनष्टम् वयं च म्लेच्छ धर्मानुयायिना पाशेन संर-क्षिताः। "येहीदानीं "अस्पृश्या" इति मन्यन्ते।

ते ऽस्माकं भ्रातर एव न ते जातिबहिष्कार्याः

अस्माकमेव तेऽवयवास्तेषामप्यस्ति पठनपाठनाधिकारो ऽतो ऽतस्म्लेच्छीभवन्तो निजनयनैर्निरीक्षणीयाः, तथा च सन्मार्गे, वैदिकधर्मध्वजातले, आत्माङ्के वा सप्रेमानेयाः" इत्युपदिशतानुसृता च भगवता दयानन्देन यदस्माकमतिरुपकृतं तद् वचसामगोचर एवास्ति।

"विदेशयात्रा कर्त्तव्या नास्ति दोषलेशोऽपि विदेशगमने तत्र-गत्वा कौशलादिकं शिक्षणीयम्, तस्य च निजदेशे प्रचारः कर्तव्यस्तथं भारतोन्नति र्चिरादेव भविष्यतीति' तेनैवोपदिष्टमस्ति।

"भारतीयाः जाङ्गलिका आसन्निति" पाश्चात्यानां विचारं स एवामन्दधीः शतधा खण्डयत्, समस्थापयच्च भारतीयानां मानसेषु स्वपूर्वपुरुषाभिमानम्।

( ४ ) चतुर्थस्तस्य मुख्यस्सुधारः धार्मिकविचाराणां संशो-धनस्य विद्यते। तेनहि नामार्षग्रन्थानां प्रचारः कृतः, प्रतिषिद्धश्चानार्षग्रन्थानां युक्तिवादपुरस्सरं पठनपाठनक्रमः। ईश्वरस्य याथार्थ्य

स्वरूपं वेदमन्त्रैः प्रतिपादितम । तदनुसारञ्च वेदमंत्रै रेव तदुपासना-विधिः शिक्षितः खण्डितश्च मूर्तिपूजादीनामसत् कृतीनां विधिः ।

मद्यमांसादीनां युक्तिपुरस्सरं खण्डनं विधाय, तेन बहूनां प्राणिनां प्राणरक्षा, मनुष्याणाञ्च शरीररक्षा कृता एव तेनैव दयावता "यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवता इति मनुवचनं सर्वत्र समुद्घुष्य दयनीयदशानां स्त्रीणामुद्धारः कृतः ।

साम्प्रतं किमन्यत्पल्लवितेन, तेन महर्षिणा सर्वथैव भारतस्य सुधारः कृतः, निष्कण्टकः कृतश्च भारतोन्नतिमार्गः । यदिनाम सर्वे भारतीयास्तस्य वचनानि पीयूषपतिपिवेयु स्तदा नूनममरतामुपलभेयु रितिनो दृढं विश्वासबन्धः ।

# गीता-विमर्श:

नहि तिरोहितं गीता प्रयोजनं कस्यचित्। सर्व एव जानन्ति यदनेनैवोपदेशेन व्यापारितः पार्थः श्रीमता कृष्णेन युद्ध कर्मणि। 'क्लैव्यं मास्म गमः पार्थ !' इत्यादि पदेनान्येन च पद जातेन गीतायाः पौरुषेय प्रतिष्ठापनं स्वभाव सिद्धम्। "हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्य से महीम्" "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते, न सन्यसनादेव सिद्धिं समधिगच्छति" एवं गीताया उपदेश परम्परा मनुसरन्त एव सन्ति केचन नव वयस्काः सज्जना, ये हि करतलधृतजीवनाः सन्तो न केनचित् बिभ्यति। तेषां जिह्वासु लेखनिषु वार्तासु च सर्वत्र गीताख्यान माकर्ण्यते। ते हि गीतामेव शिरसि निदधति, तदुद्देश्यानुसारमेव सर्व कर्माणि विदधति। नात्र विघ्नो यथाथातथ्येनते गीता कथनमेवानुसरन्तीति। यतो हि परत्र सन्ति बहवोजना ये हि गीतामेवानुसरन्तो गंगातटेषु उदरपूर्ति पर्याप्तेषु च मठेषुस्वजीवनमतिवाहयन्ति। उभावपि गीतालक्ष्यं लक्षयन्तौ विलक्षणं मार्गमनुगच्छतः, न चानुमोदयतः पारस्परिकं कमपि सम्बन्धम्। एकेनैवोपदेशेन उभयमिदं विपरीतमप्य विपरीततां नीतमिति कौतूहलाक्रान्तेव सर्वेषां बुद्धिः। किमिति गीताया एवैतादृशं माहात्म्यं, अथवार्थ काराणां मतिमान्द्य मुत कारणान्तरमिति कारण जिज्ञासूनां सम्मुखे सर्वतः पूर्वमिदमेव समायाति यदुभयोरन्यतरो गीतार्थ करणपाटवं न धत्त इति।

इति विचारानन्तरं के कृष्णोक्तसरणी मनुसरन्तीति जिज्ञासमानेभ्यो विदितमेव यद्भगवत उपदेशादृजुं नः कथम्प्रभावितः स-

मभूत्। किमसौ समर मेवाभ्यनन्दत गंगा तटेषु वा विजहार। पूर्व भूत कार्य कारण शृंखलामवगच्छन्तः पाठकाः कृष्णोपदेश-परिणति परिपन्थीनवश्यं निन्दयिष्यन्ति, नन्दयिष्यन्तिच "सुख दुःखे समं कृत्वा लाभालाभौ जयाजयौ" इत्युक्तमभिमुखीकृत्य कार्य्यव्यापृतचित्तान्। अद्यतनीने भारते सांधवः सर्वे कृष्णोपदेश परिणति परिपन्थिनः सन्तीत्यपि विदांकुर्वन्तु पाठकमहाभागाः।

तत्वतस्तु पक्षद्वयं निष्कामकर्माधीनमेव। पृथा वदन्ति उभय पक्ष वादिनः यदस्ति गीतायां निष्काम कर्मणो माहात्म्यम्ः—

"विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः निर्ममो निरहंकारः स शान्तिमधि गच्छति।"

इत्युक्त्वा स्वार्थ परिभूतमतयःअयतयोऽपियतयः परित्यजन्ति स्व गृहम्। नावगच्छन्ति यदनेन प्रकारेण दुष्कर्माणि ते पिण्डीकुर्वन्ति, घोरे नरके च स्वयमेव पतनोपायमाविष्कुर्वन्तीति। अस्ति तेषां कथनम्ः—

"त्यक्त्वा कर्म फलासंगं नित्यतृप्तोनिराश्रयः कर्मण्यभि प्रवृत्तोऽपि नैव किञ्चित्करोति सः।"

अर्थात्, निष्कामकर्मिणोमाहात्म्यमिदमेव यत्सकर्मकुर्वन्नपि "नैव किञ्चित्करोतिसः" अतएव च मुच्यतेऽस्माज्जन्मनः, कर्मणां नाशस्यमुक्तिहेतुत्वात्। "नाभुक्तं क्षीयते कर्म" इति न्याया त्कर्म क्षयासम्भवः। कर्मक्षयासम्भवेऽपि श्रीकृष्णोक्तया निष्काम कर्मणा कर्म क्षयो भवतीत्येतस्य, अ मेव भावः, यन्मनुष्यः कर्म एव न कुर्य्यात्। अयमेव च निष्कामकर्मणोऽर्थः।

उक्त कथनानुसारं उचित मिव प्रतीयते तेषां कनम्।

अतएवं एतदस्ति विचारास्पदं किमित निष्कामकर्मैव गीतायाः सारभूतं यदस्ति। एवमेव यज्ञ शब्दोऽपि सन्देह कोटीमेवाश्रयति। किं भगवता यज्ञ शब्देनाभिमतं किञ्चनाभिमतमिति। अत्रापि सन्दिहानो मन्त्रयते, यज्ञ शब्देनाग्निहोत्राद्यभिमतश्चेत्कुतोनार्जुनः यागादिषु प्रवृत्तः। न चेद्यज्ञस्याग्निहोत्रार्थः कोन्यः सम्भवतीति?

एवमेव पारिभाषिकैः शब्दैः परिलुण्ठिताः गीतापाठकाः नैकमपि कूलमुपाश्रयन्ति।

एतादृश्यां परिस्थितौ सत्यां सर्वैरपि भूरिपरिश्रमेण चिन्तनीयोऽयं विषयः। तत्र प्रथममस्माभिरेव साशं। किञ्चित्स्व विचारो ज्ञापनं करिष्यते, येनान्येऽपि विचारक महाशयाः सरणीमिमामनुसरेयुरिति—— असमाप्तः

"स"

# मृत्यु-शय्या

हे दयामय ! निजाङ्के निधेहि,
तात ! पुत्रोऽस्मि ते त्वं समेहि ।

एष कालश्चिरप्रार्थितो मे,
देव ! ते सङ्गमस्यागतो मे ॥ ध्रुवम् ।

( १ )

अद्य हर्षो महानेधितो मे,
यत्कपाटं विदीर्ण हृदो मे ।

त्यज्यतां जीव मे जीर्णदेहः ।
लभ्यतां ब्रह्मसङ्गो विदेहः ॥

( २ )

नाथ चिन्ता तु मे केवलं सा,
मातृभूमेर्न दृष्टं सुखं हा !

तात तां मातरं दीनदीनाम् ।
शोकहीनां कुरु त्वं प्रवीणाम् ॥

( ३ )

हन्त कार्य्याय यस्मै त्वयाहम्,
प्रेषितस्तन्न पूर्ण गतोऽहम्

प्रेषयेश्चेत् पुनः प्रेषयेस्त्वम् ।
भारते मां पुनः प्रेषयेस्त्वम् ॥

( ४ )

तात धर्मस्य लोके न लेशः,
किं क्वचिद् दृश्यते धर्मशेषः ।
सर्वशक्तिस्त्वयि प्रेमसिन्धो,
वारयेः पापितां दीनबन्धो ॥

( ५ )

भारतं पुण्यभूमिः पुनः स्यात्,
धर्मराज्यं स्वराज्यं पुनः स्यात् ।
देव देशः पुनः प्रोन्नतः स्यात्,
एष सर्वोपि लोकः सुखी स्यात् ॥

( ६ )

एष मृत्युर्हि यानं ममास्ते,
एनमारुह्य लप्स्ये सुखं ते ।
नाथ लब्धुं तवानन्दसारम् ।
एष आयाम्यहं त्वामपारम् ॥

———:(*):———

# दयानन्दो देशभक्तिश्च

श्रीमतो दयानन्दस्य कार्य्यालोचनाय भारतवर्ष स्तस्मिन्स-गये कांनिद्रामाललम्बे, इदानीञ्च कां श्रियं भजत इति विचारणा विधेया। यदि नाम तात्कालिकी दशा नितरां शोचनीया अश्रुप्रवहणपट्वी हृदयतोदकरी, आधुनिकीचोन्नता हृदगाह्लाद पारावारोत्पादिका च स्यात्तदावयं तं देशभक्तादि शब्दैः सम्बोधयितुं पारयामः तदैव देशभक्ति दयानन्दयोः कमपि सम्बन्धं बद्धुमर्हामः।

तात्कालिक भारत दशा विचाराकूपार परतन्त्र सति रोमाञ्चयन्ति मे वपुः, परिस्फुरतः अधरौ परिचतः नेत्र कम्पते च हृदयम्। निखिलाअपि भारत जननीसुताः मैक्समूलरादीनेव प्रमाणीकृत्य वेदान् नगीनृत्यमाना आरण्यकाः गोपा एव समपीपदन्निति बुद्धिंदधानाः वेदपराङ्मुखाः बभूवुः। येकेऽपि च विरलास्तत्वज्ञास्तेऽप्य नन्यगोचरो वेदार्थं इति ब्राह्मणान्यान् राजन्यादीन् वेदप्रतिपादित कार्यं विमुखी कुर्वन्तो नैजीमेव पैतृकी सम्पदं मन्वाना आसन्। वैदेशिकाश्च तरुणानां भारतीयानां शेमुषीं मुष्णन्तइव वेदविरुद्धं निदिशन्तो दरीदृश्यन्ते। यथा रुड़कि नाम्न्यां नगर्यां तत्रत्या विद्याव्यसनिनो विद्यार्थिनः स्वान्त ध्वान्त कृतान्त मानन्दकन्दं दयानन्द मित्थमाहुः यदस्माकं सर्वेऽप्यांगलीया उपाध्याया इत्थमाचक्षते "यदस्माकं पूर्वजाः परिसरवर्तीनि दृश्यान्यवलोक्य ग्रंथे जग्रंथुः त एव वेदा इत्यभिधानेनाभिधीयन्ते, न तत्र किमपि ज्ञान मैहिकं नापि पारलौकिकं मिति" अतो वयं वेदा निखिल

विद्याकूपारा इति कथं मन्महे। इत्थं सकलोपि भारतवर्षो वेद-पराङ्मुख आसीदिति नातिशयोक्तिः। तदीदृशं घोरतमं तमः श्रीमान् दयानन्द एव निरस्य सम्पूर्णे च भारते भ्रमित्वा जनान वेदभक्तान कार्षीत्। स एव निखिल संशीति ग्रन्थीरचखण्ड-दिति न परोक्षं प्रेक्षावताम्। अद्यत्वे येकेऽपि वेदाज्ञां शिरसा वहन्ति ते सर्वेऽपि दयानन्द शिक्षादीक्षिता एव।

यानि स्थलानि ऋषिमुनि पटुवटवः पुरा होमेनाहुति गंधान्य कुर्वन् तान्यधुना तत्पुत्रा एव मद्यमांसादिभिः पूति गंधीनिकुर्व-न्तीति हृदय शूलकरं दृश्यं दृष्ट्वा तेषामेव प्रतिपादितामाज्ञां निर्वहामः स्मृतिरपि च प्रतिपादयति यथा "न मांस भक्षणे दोष" इत्यादि वाक्छलानि च श्रुत्वा असासारं वर्षन् द्विपदान् मा हिंसीरिति वेदाज्ञा मुदाहृत्य प्रसह्य निराकृत्य तान्नवाङ्मुखान करोत्। अनेके च सत्य सरणि मनुसस्नुः मांसमद्यादिकञ्च विजहुः

यदि नाम शूद्रकर्ण गोचरी भूतो वेदपाठि पाठध्वनिः स्या-त्तर्हितस्य कर्णछिद्र प्रणाली द्रावितसीसक गर्भाक्रियतैतादृशी दुःसहा अयोग्या च प्रक्रिया "यथेमां वाचमिति छ दोविधान मुद्धृत्य भगवता विक्रिया मापादिता। स्त्री शूद्रौ नाधीयाता-मिति पौराणिकवादं रसातल माश्रयितुं प्रेषयमास श्रीमान्। स्त्रिय एवानधीता अगुणिन्यो भविष्यन्ति चेत्सर्वा संततिः स्व-कीयमातृजनस्य दोषानुकृत्य दुःखपाशेन पाशिता स्यादिति दोषमुदाहृत्य स्त्रीशिक्षां प्रवर्त्तयामास यत्फलमद्यत्वे नाऽतिरोहितं मतिमताम्।

सर्वानप्युपकारानति शेते गोवधांदोलनम् । सूनासु गोवध-बीभत्स दृश्यमवलोक्य प्रतिग्रामं भ्रमित्वा दुश्चिन्त्यं प्रयत्नमकरोदत्र गोकरुणानिधि रेव निदर्शनम् । यद्यपि साफल्यं नाभ्यगच्छत्तथापि बीजवप्ता स एवेति संस्मृत्य हर्षवर्ष पूर्णं जायते नश्चेतः । अद्यत्वे यत्स्थाने स्थाने गोशालाः गोरक्षिणी सभाश्चेति सर्व तन्मूलकमेव । यदि नाम नारप्स्यदांदोलन मिदं दयानिधिस्तदा गोनामकथावशेष एव समवत्स्र्य दितिना दृढो निश्चयः ।

बालोद्वाहेनैव बहवोमृत्युना ग्रस्यंते इति सम्यगवबुध्यस्वव्याख्यानेषु निज पुस्तकेषु स्थाने स्थाने ऽस्य प्रतिषेधनम् करोद्दयानिधिः । बालोद्वाहेनैव बहवो दशवर्ष देशीया अपरे पञ्चवर्षवयस्का एव रुदतां स्वबंधूनां पश्यतां परलोक मालम्बंते । यद्वोद्दिश्याद्यानेके सज्जना अनेक विधं प्रयतन्ते ।

धनञ्च यत्पूजकेभ्यो व्यतारि श्रेष्ठिभिस्तस्य दुरावस्थामालोक्य मूर्त्तिं पूजनं वेदविरुद्ध मिति व्याहरन् निखिलान् मतिवादीन् शास्त्रार्थे पराभूय बह्वीः मूर्त्तीः गङ्गायां प्रवाह्य धन मप मार्गादपकृष्य पाठशालाः स्थापयामास ।

उपरोक्तानि प्रियाणि कुर्वाणोऽपि न विरराम परोपकारव्रती दयानिधिः । मृते मयिदेशं कः प्रबोधयिष्यतीति विचारसन्तान वितानैकतान आर्य्यसमाजं संस्थापयामास । परःसहस्राः जनाः गाढान्धकारे विलुलन्तः मतांतरानुपगच्छन्तोऽस्यैव समाजस्य प्रयत्नेन वैदिकधर्मं समा शिश्रियिरे ।

भारत ! यदि नाम अयं महात्मा तस्मिन्समये नोदपत्स्य-स्तत्र संदेहलेशोऽपि यदस्मत्पूर्वजानुसृतो वैदिकोधर्मः कथाव-शेष एवा भविष्यत् । अखिला अपिम्लेच्छा इव संध्यादि नै-त्यिकं कर्म अहास्यन् । तदेव दृश्यं चक्षुषः पुरतो ऽद्रक्ष्यत् यदद्य यवन पण्यवीथिकासु प्रतिहाटकं तित्तिरवर्त्तक मत्स्य मांस पूतिगंधाविलमवलोक्यते । यदि दयानिधि नांवतरिष्य दस्मिञ्ज गति स्पर्धतामवदधताञ्च वेदानां का गतिर भविष्यत् नाम्नैव पूजा समवत्स्यत् वेदार्थज्ञा भावात् ।

यस्यसकलं जीवनमेव देशभक्तिमयं स्यात्, येन यत्कृतं तदस्मभ्यम्, किञ्चिदप्यस्मन्न तिरोहितम्, यश्चदेश प्रियमेव कुर्वाणो लोकान्तरंजगाम तस्य देशभक्ति विचारणानुमोग्ध्यमेवेति ॥

"दे० द०"

# भवभूतिः

अयि स्निग्धाः बालकाः !

अद्य किल कवि प्रवरस्य भवभूतेश्चरितवर्णनां श्रीमतां समक्षे स्थापयितुमीहे। तत्र तावन्न किलायमविदितं वो यन्मनसि समुत्पन्नस्यैवार्थस्यास्माभिर्वचनवर्त्मना निरूपणं क्रियत इति।

यदेव वस्तु मनस्यभिनिष्पन्नं तदेव वचनमार्गेण बहिः प्रकाशमेति न तु तदतिरिक्तमिति न किल प्राकृतानामप्यविदितम्। एवं स्थिते, कस्यचिदपि व्यक्तेर्वचनाकर्णनेनैव तदीयं मनोगतं विचारजातं तदीयं सौजन्यमसौजन्यं वावगन्तुं पार्यम्।

अतो भवभूतेश्चरितालोचनां कामयमानैरस्माभिस्तत्कृतिभिरेव तच्चरितालोचनमाचरितुं सुकरम्।

भवभूतेः कालनिर्णयः—

नहि भवभूतिना स्वकृतिषु क्वचिदपि स्वसमयद्योतकं किमपि प्रमाणं विन्यस्तम्। साम्प्रतं तत्कृतिषु नाटकत्रयमेव नः करगता भवति यया तदीयमलौकिकं पाण्डित्यं प्रखरा च काव्यसङ्कलन शालिनी मतिर्द्योत्यते। कविशिरोमणेः कालिदासस्य नामग्रहणसमकालमेव भवभूतेरपि नाम मुखरयति नः कालिदसेन समकोटितां प्रख्यापयितुं। साहित्य सरसि इदमेव केवलं कमलयुगलं यत्किलान्यानि कविसुमनांस्यतिशयदतितरां चकास्ति। भवभूतेः कालनिर्णये, कवियुगलमिदमेकमेव कालमलञ्चक्र इति परम्परयानुशुश्रुमः। अस्यैवार्थस्य परिपोषणात्मकं निम्नगतमेकं कथानकमपि नः श्रुतिपथमवतरति। य-

तिकल भवभूतिः स्वनाटकेषूत्तरमुत्तररामचरितं निर्माय कवि-शिरोमणिमुपगम्य तमश्रावयदसौ चाकर्ण्य प्रहृष्टमनाः, मदीय-कृतिभिरपि रमणीयतरेयं भवदीया कृतिरिति द्योतनाय तां कृतिं निजशिरसि समारोपितवानिति। परं कथानकमिदं निर्मूलं प्रमाणविकलं च, केवलमैदम्पर्यमेवास्य प्रतीयते यन्नहि कालि-दासो भवभूति मतिशेत इति।

वस्तुगत्या कविरयं अष्टमशताब्दस्याद्यमेवाध्युषितवानेव-दन्तरएव च नाटकत्रयं निर्ममाविति।

इदमत्र पुष्कलं प्रमाणम्। कवि कल्हणेन स्वराजतरङ्गिण्यां वक्पतिराजाख्येन कविना समुपवर्णितमस्यापि नाम। उभा-वपीमौ कान्यकुब्जेश्वरस्य यशोवर्मणः राजकीयां परिषदमल-श्चक्राते। परं ललितादित्येन काश्मीरेश्वरेण पराजिते यशोव-र्मणि भवभूतिस्तदाधीन्यमुपगतः। ललितादित्यस्याधिपत्यकालः ६९३ मिताद्वत्सरात् ७२९ पर्यन्तश्चास्तीति भवभूतेः समयोऽप्यष्टम-शताब्दस्याद्यमेवेति निश्चिनुमः। तस्य लेखन प्रणाल्याप्युपरितन-मेव द्रढिमानमेति।

तस्य गद्यमयी रचना सुबन्धु बाणभट्ट दण्डिनां रचनाभिः परमं साम्य मुपैति। बाणभट्टश्च सप्तमशताब्दस्यान्तिमं भागम-ध्युवास। तेन स्वकीये हर्षचरिते केषांचन कवीनां नामानि परिगणितानि किन्तु न तत्र भवभूतेर्नामवर्णना। इदमेवानुमा-पयति यन्न भवभूतिस्तत्कालीनतामलश्चक्रे न वा ततः पूर्वमप्या-सीदिति। अन्यथात्वे बाणस्तदीयमपि नामावश्यमवर्णयिष्यत्।

अनेनानुमीयते प्रतीयते यद् भवभूतिरष्टमशताब्दस्याद्यभागे व्यराजत।

भवभूतेः शास्त्रपारीणत्वम्—

भवभूतेर्विज्ञानसम्पन्नाः पूर्वपुरुषाः विदर्भान्तर्गतं पद्मपुरनामानं स्थानमध्यूषुः। वेदवेदान्तानामध्ययनाध्यापनं तेषां परम्परागतमासीत्। नीलकण्ठनाम्ना विदितस्तस्य पिता भट्टगोपालश्च तस्य पितामह उभावपि बहुलतरविज्ञानसम्पन्नावास्ताम्। निजपूर्वजानां स्तवनं गायं २ साभिमानमयं निजमानसमुल्लासयति। नानाविज्ञान निष्णाता ह्यासन् तस्य पितरः। पैतृकमिदं ज्ञाननिधानं तस्मिन्नप्यनुगतं प्रतीयते तस्य कृतिभिः। एवंभूतस्य ज्ञाननिधेः स्वजनकस्याधीन्यमङ्गीकृत्य पुण्यपावने परिस्थाने शिक्षामधिगच्छन् यामप्रतिमां पावनीं शिक्षामधिजगाम भवभूतिः, सा तस्य कृतिभिरेव सम्यक् प्रत्याय्यते। निज बाल्यकालीनं शिक्षणं स्वनिकेतनस्थितेनैव तेनाधिगतम्। परं प्रौढा शिक्षा तेन ज्ञानोदधिं ज्ञाननिधिनामानमाचार्यमुपगम्य समधिगता। उपनिषदादि ब्रह्मज्ञानं व्याकरणादीनि च शास्त्राणि आचार्यदेवादयमधिययौ। स खलु अनुपमां स्मृतिं बभार।

ज्ञाननिधिनाचार्येण या अपि विद्याः भवभूतौ संरोपितास्ता स्तस्मिन् सुतरां फलिताः पुष्पिताश्च। तद्गुरुणा स्वशिष्यमधिकृत्य समनुष्ठितः स्वल्पोऽपि परिश्रमः भवभूतौ महान्ति रमणीयानि फलानि प्रसुषुवे। भवभूतेरपि स्वगुरौ परमा भक्तिरासीत्। मालतीमाधवे एवं किलासौ निजगुरुमभिनन्दद् "नहि ज्ञाननिधिना शिक्षां प्रापितः कश्चिदपि कामपि विद्यां धारयितुमक्षम इति। तस्य कृतिषु स्थाने २ तस्य वेदाभिज्ञता, शास्त्रषट्क प्रावीण्यं च समुल्लसति। स्थाने २ च वेदान्तसिद्धान्तानामनुगमनमनुतिष्ठत्यसौ स्वरचनासु। प्राधान्यतश्च

धिवर्त्तवादमयं वारं वार मुपवर्णयति । वाल्मीकिकृतं रामायणं शब्द ब्रह्मणो विवर्त्त मेवायं मनुते । उत्तर रामचरितस्य चरमांशे अगाधिदं ब्रह्मणो विवर्त्त मापादयन्न वमुपपादयति ।

यत्किल यथाहि, वीचि बुद्बुदमयं सलिलं सलिलमेव, नहि त-न्निसरं किमपि, कालान्तरेण च सलिलभावमापन्नन्तन्मयतामेवात्मनो निश्चयिष्यत्येवं जगदपीदं प्रलयकाले ब्रह्मणि विपरिणमनमेष्यति । नहि सौवर्णी मुद्रा हेम्नः किमप्यन्यदिव, नचघटो मृदोनितान्तं भिन्नः अपितु तद्विवर्त्त एव रूपान्तरं विभर्ति ।

तत्कालीना पण्डितमण्डली भवभूतेः प्रगल्भतां वैदग्ध्यं चावगम्य तं प्रति सबहुमानं नयने चकार, श्रीकण्ठेति तदुपनाम तदीयपाण्डित्यो त्कर्षमेव द्योतयति । कान्यकुब्जेश्वरस्य यशोवर्मणः राजकीयपरिषदि तस्य समादरस्तावकीनामलौकिकशक्तिसम्पत्तिमेव प्रख्यापयति । भवभूतिस्तारुण्ये गोदावरीतीरवर्त्तीनि बहुनि किल कान्तारान्तरालानि सञ्चचार तन्नत्यानि च प्रकृतेर्विलसनान्यतितरां तन्मनसि कृतस्थाना न्यासन्निति तस्य कृतिषु स्थाने स्थाने प्रकृतिवर्णनमेवेदं द्योतयति ।

तेन स्वकीयं पाण्डित्यं काव्यकलायां विनियुक्तमिति तत्कालीनानां पण्डितानां तदीय बन्धूनां चानभिमतमासीदिति प्रतीयते, ते किल त-स्य विद्याविनियोगमन्यत्र समुचितस्थानमधिकृत्यैव समीहाञ्चक्रुरि त्यत एव न ते तस्य कृतिषु कृतास्थाः प्रतीयन्ते ।

अत्र तदीयोक्तिरेव प्रमाणम् ,ये नाम केचिदिहेति' । तस्य वर्णना त्मिकयः रचनाः सम्यगिदं साक्षिरूपेणावस्थापयन्ति यदसावनुभूतं साक्षात्कृतमेव वस्तु जातं समवर्णयदिति । न च तस्य वर्णनात्मकाः प्रबन्धाः कपोलकल्पिता अननुभूता वा अपितु नयनानुभवमार्गयोरेक-पथमवश्यमवतीर्णा इति दण्डकारण्यगतं भीतेः समुत्पादकं तस्य व-र्णनं, पञ्चवट्याश्च शान्तरसोपकारक मुपवर्णनं, उत्तरितनमस्मद्वचनं साधुतरं द्रढिमानं नयतः ।

तदीया रचनाशैली अतीव समयानुगुण्यवती अवसरौपयिकी च, अतएव सुतरां विकासयति रसिक जनानां मनोमुकुलानि । इदं त-स्यैव पाटवं यद्धि स भावोपयोगी न्येव वर्णानि संयोजयति ।

करुणा रसार्द्रे के कारुण्य जनकान्येवपदानि संनिधत्ते, वीर र-

सोद्वेगे च वीर्योत्कर्षे ऽकान्त्येन हि वर्गाणि सङ्कलयति। कारुण्य विपाके च नियतं मनो द्रवीभाव मेति रसिक जनानां, वीर रसपरिपाके च किंचिद् पूर्वमेव तत्त्वं दोष्णोराविर्भवति यत्तौ संस्फुरत इव।

**निष्कर्ष रूपेणेदं मे विवक्षितं यद् भवभूतिः सकलमपि कविकलौपयिकं गुण वृन्दं दधार काव्योपयोगिनी प्रतिभापि तस्मिन् विरराज तदुपयोगि कला प्रावीण्यमप्यासी देव तस्मिन्निति दिङ्निदर्शनमेव बहुतरं मतिसम्पन्नेषु॥**

——:०:——

## महर्षिदयानन्दो विदेशयात्रा च।

शीर्षकमवलोक्यैव केचित्सहृदयाः पाठकाः अवश्यमिदं विचारयिष्यन्ति यन्महर्षे र्विदेशयात्रायाश्च कःसम्बन्धः? परं यथार्थ प्रकाशकस्य, मानवजातिसुधारकस्य, आर्यसमाजप्रवर्तकस्य वेदानुयायिनः कर्मयोगिनो महर्षिदयानन्दस्य विषये नेयं विचारणा यथार्था। यतः आर्यावर्तस्य वर्तमान दुःखानि दूरी कर्तुं नो विदेशयात्रैव साधीयसी" इति विचारस्य प्रचारकाणां शिरोमणिः स्वामीदयानन्द एव। स स्वयमपि विदेशयात्राय ऐच्छत्। अतएवासावांगलभाषां पठितुमारेभे। परमार्यावत एवा सन् वेदभाष्यवेदप्रचारादीनि बहूनि कार्याणि यानि विदेशयात्रायां कण्टकरूपाण्येवासन्। यद्यसौ अवसर मलप्स्यत् तदावश्यं विदेशयात्रा म्व्यधास्यत्।

सत्यार्थप्रकाश नाम्नि महति ग्रन्थे दशमसमुल्लासे विदेशयात्रा विषये यदुपदि ष्टवा न्महर्षि दयानन्द स्तेन लाभोपार्जनाय प्रेरणमेवास्य लेखस्य लक्ष्यम्। अत्र हि तदुद्धरणे स्वामिनो भावस्यन किञ्चिदपि भेदो ऽकारि परं तस्य भाषाया भावं प्राह्यं तद्देवगिरा ऽनूदितम तद्दित्थमस्त्युपदिष्टम—

आर्यावर्तजनै नेदं चिन्तनीयं यद्विदेशगमने आचारो नश्यति। ये जनाः विदेशेषु गत्वा सत्यभाषणादीनुत्तमा न्व्यहारान्न हास्यन्ति ते अवश्यमेव सदाचारिणः पवित्रात्मनश्च भविष्यन्ति, तेषा माचारो धर्मश्च न कदापि नश्यति भ्रश्यति वा। परं ये आर्यावर्तएव निवसन्तो कुपाचारादी न्कुव्यवहारा नाचरिष्यन्ति त एवाचारपतिताधर्मभ्रष्टा वा भविष्यन्ति। कस्या ऽपि जनस्य आचारनाशस्य धर्मनाशस्य वा कारलं न कदापिकथमपि विदेशयात्रा। सा तु स्वदेशोन्नते रुपायेष्वेक तमा। पुरा काले आर्यवर्तीया जना व्यापारादीनि कार्याणि कर्तुं सर्व स्मिन् भूगोले भ्रमन्ति स्म। व्यासाज्ञानुसारेण शुक्राचार्यः पाताल-प्रदेशात् ( वर्तमाने 'अमेरिका' इति प्रसिद्धः ) मिथिलाया मागतः। श्रीकृष्णार्जुनौ अश्वतरी मारुह्य पाताले गत्वोद्दालकर्षिं महाराज-युधिष्ठरस्य राजसूययज्ञे न्यमन्त्रयताम्। धृतराष्ट्रो गान्धाररराजपुत्रीं उपायंस्त। पाण्डुराज्ञो पत्नी माद्रीतिनाम्नी ईरानप्रदेशस्य राज्ञः पुत्री आसीत्। यद्यस्माकं प्राचीना आर्या देशदेशान्तरेषु द्वीपद्वीपन्तारेषु नागच्छन् तर्हीमाः सर्वा वार्ताः कथं सत्यभाजः स्युः महाराजयु-धिष्ठिरस्य राजसूययज्ञे सर्वभूगोलाधिपतीनामन्त्रयितुं भीमादय-श्चत्वारो भ्रातरश्चतसृषु दिशासु जग्मुः। इदानी मस्माभिः स्वदेशो-न्नतये विदेशयात्राऽवश्यं कार्या।

अद्यश्व आर्यावर्ते स्पृश्यास्पृश्यस्य धर्मनाशस्य च शङ्का केवलं मू-र्खानां ःकथनेनाज्ञानेनचास्ति। य इदं मन्यन्ते यत्स्वदेशे दुराचारादी न्कृत्वा मनुष्योनाचार भ्रष्टो भवतिवा धर्मेण हीयते, अन्यच्च विदेशेषु सत्पुरुषाणां सत्संसर्गेण दोषं मन्यन्ते ते नितान्तं मूर्खा एव। इदमस्ति सत्यमवश्यं यन्मांसभक्षकै र्मद्यपैर्जनैः सह सङ्गेनार्या अवश्यं दोषवन्तो भविष्यन्ति परं तेषामपि गुणग्रहणे न को ऽपि दोषाः, न वा पापम्। ये मनुष्या देश देशान्तरेषु द्वीपद्वीपान्तरेषु गमनागमने न शङ्कां कुर्व-न्तिते तेषा मवश्यं गुणानगृहीत्वा दुर्गुणानत्यक्त्वा सद्वार्ताःस्वीकृत्या सद्वार्ता अपहाय महान्त मैश्वर्य्यं प्राप्नुवन्ति। एषामस्माभि र्मद्यपा-नादीन् दुर्गुणांस्त्यक्त्वा सद्गुणाअवश्यं ग्राह्या। विदेशीयानां स्पर्श-स्य दर्शनस्य च पापकथनं मूर्खतैवास्ति, एतन् कथयन्तो जनान तैर्योद्ध

मुत्सहन्ते यतो युद्धे स्पर्शनदर्शनमप्यावश्यकं । सज्जनानां कर्तव्यं यत्ते रागद्वेष मिथ्याभाषणादीन्दोषान्विहाय निर्वैरप्रीतिपरोपकार-सज्जनतादीन्गुणान् धारयेयुः प्रत्येकमार्यावर्तनिवासिना सम्यक्तया ज्ञेयं यद्धर्मः कर्तव्य आत्मनि चाधितिष्ठति। यदावयं सत्कार्याणि कुर्मस्तदा देशदेशान्तरेषु द्वीपद्वीपान्तरेषु गमनाद्यको-ऽपि दोषः प्रभवति। दोषस्तु पापादेव प्रादुर्भवति।

पाखण्डिनो जना मनसीत्थं विचारयन्ति यद् यदि जना पठिष्यन्ति देशदेशान्तरेषु च यास्यन्ति तदा एते बुद्धिमन्तो भविष्यन्ति नास्मत्त पाखण्डपाशबद्धा भविष्यन्ति। तेन ह्यास्मकीना प्रतिष्ठा जीविका च नष्टा भविष्यति। इतिकृत्वैव ते भोजनाच्छादनादिषु विघ्नन्ति येन जना विदेशेषु न यान्तु। देशदेशान्तरेषु द्वीपद्वीपान्तरेषु राज्यव्यापाराभ्या मन्तरा कस्यापि देशस्योन्नति रत्यसम्भवाऽस्ति। यदा स्वदेशे विदेशिनः आगत्य राज्यं व्यापारं वा यथेच्छं कुर्वन्ति तदा दारिद्र्य-दुःखाभ्यां विना किमन्यत् स्यादित्यस्त्युपदेशः।

सहृदयाः पाठकमहोदयाः! उपर्युक्तोपदेशानुसारेण व्यवहर्तव्यमिति प्रत्येकमार्यावर्तवासि जनेन मनसि निधेयम् नहि तत्साधारण -मुद्गोणं वा कर्तव्यं परं तदत्यावश्यकम्। अत्रहि विदेशयात्राभिलाषिभिर्जनै रिदं कदापि न विस्मरणीयं यदास्माकीनं कर्तव्य मिदमेव यत्तेषां गुणान् गृह्णीमः। मांसभक्षण मद्यपानादीनां दोषाणां ग्रहणं सर्वथैवानुचितमयोग्यं वेति। विदेशगमनात् प्रागस्याऽपि सविशेषतया ध्यानं रक्षणीयं यद्विदेशे कश्चिद्दुर्जनो न प्रतारयेद् तद्वद् वेदोक्त धर्मस्य स्थापनं पाखण्डमत खण्डनञ्च सम्यक्तया स्वदेशे नियमत्वेव शिक्षणीयम् ।

एष्वविस्मरणीयेषु वाक्येषु ध्यानं दत्वार्यावर्तस्य प्रत्येकयुवकेन विदेशयात्रावश्यम्विधेया। प्रत्येकं चयात्रिणा "आर्यावर्तस्याभ्युदयः" इति लक्ष्यं मनसि सर्वदैव निधेयम् आशास्यतेऽयं जनो यद् यदा कदाऽपि कश्चिदपि प्रलोभनं मार्गमवरोत्स्यति तदैवार्यावर्तीया नवयुवका महर्षिदयानन्दं स्मृत्वा प्रलोभनेभ्योऽवश्यं स्वात्मानं रक्षयिष्यन्ति—इति।

( अयंजनः )

# उषाया नियमाः *

१ "उषा,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते । अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते आधुनिकं विज्ञानं दर्शनं चावलम्ब्य महता नूतना आविष्काराः यथायथं वर्णयिष्यन्ते। किञ्च भारतजगतः वर्तमानान्दोलनोपन्यासपुरःसरं तत्र महत्वपूर्णालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोऽप्यधिको यदस्यां भाविका गुरुकुल शिक्षकाश्च लेखा भविष्यन्ति । लेखानां भाषा तावदतिमात्रं सुगमा किञ्च चेतोहरा भविष्यति । येन जनानामपि संस्कृतभाषानुव्यवहाराणामप्यर्थावबोधे काठिन्यं न प्रतीयेत। तद्दिक्षांशसंख्यायैव तावदस्माभिः ह्रस्वा मूल्यमल्पमेव रक्षितमिति । अस्या वार्षिकं मूल्यम् तावत् सार्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।=) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याङ्कस्य मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते । आदर्श संख्या मभीप्सुभिः पत्रेण सह स्वयमाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते ।

३ ग्राहक महाशयैः स्वस्थानपरिवर्तनं झटित्येव सूचनीयम् । तथा च प्रेषितपत्रे ग्राहकसंख्याऽवश्यमेव लेखनीया ।

४ प्रतिमासं सुषा प्रकाशिता भविष्यति । यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं सत्वरं विज्ञापयितव्याः । विपर्यये सत्यस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्तृभ्यां सह पृथगेव व्यवहर्त्तव्यम् ।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः । अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते ।

प्रबन्धकर्त्ता
"उषा"
गुरुकुल कांगड़ी
डा० शामपुर

Registered Number A. 639.

* ओ३म् *

# उषा

( संस्कृतमासिकपत्रिका )

उषा अजीगर्भुवनानि विश्वा । ऋग्वेदे ।

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः ।
विगलतु जनतान्धकारलेशः, प्रसरतु देवगिरामुषाविशेषः ॥

* ओ३म् *

# उषा

( संस्कृत मासिक पत्रिका )

| द्वितीये वर्षे | * श्रावण एवं भाद्रपदः * सं० १९७२ वि० | अष्टम एवं नवमोऽङ्कः |
|---|---|---|

## भगवन्नतिः ।

गङ्गातीरे तरङ्गस्नपितहिमशिलाबद्धपद्मासनस्थै-
रन्तः प्राणा- लिमृग्यं निखिलमुनिजनैर्ज्योतिषां ज्योतिरेकम् ।
अच्छेच्छाद्योणिमालोदितनिखिलभुवं क्लेशकर्मादिशून्यं
शुद्धानन्दाब्धिचन्द्रं परममृतमजं सन्निकर्षीकरोमि ॥
एकान्ते भाव्यमानं यमनियमबलात्सर्वयोगीन्द्रवृन्दैः
वेदान्ताधारविज्ञैरतिशय मधुरैर्दान्तचित्तप्रतानैः ।
स्वज्ञानांशुप्रभावैश्चरचरयुगं व्याप्यचोद्भासमानं
भक्तप्रत्यूहशुक्रं हरिचरणयुगं श्रेयसे भावयामः ॥
ज्ञानार्कद्योतनोत्थैः रुचिरतमचमत्कारचञ्चत्प्रमाणै
र्भासां जालैः स्वकीयैरशुभतमतमःसंघसंघट्टयन्तम् ।
अत्यर्थं चित्ररूपं त्रिगुणगुणचलच्चक्रनेमीशं
वन्दे स्वात्मैक वेद्यं विधिमुखविमुखं सच्चिदानन्दरूपम् ॥
शुद्धं बुद्धं वरेण्यं त्रिभुवन तिलकं सर्वलोकैकवन्द्यं
नानेकं विश्वरूपं जनिगुणविगतं स्वच्छमेकं शरण्यम् ।
मुग्धा मुग्धेक्षणानाममृदु, मृदु परं दूरसामीप्यरूपं
रूपव्यापार शून्यं प्रणतभयहरं ब्रह्मयज्ञन्नतोऽस्मि ।

विश्वं चर्कर्ति मायाप्रकरविरचितैर्नव्यभव्यप्रवालै
श्चैनं वर्भर्ति नित्यं परहितबहुलां राजसीं वृतिमेत्य ।
अन्ते जहर्ति सर्वं विविधविधततं जातमेतं प्रपञ्चं
वन्दे वाचां परं तं निरवधिमधुरं सच्चिदेकस्वभावम् ॥
आदित्याभंयमूचे श्रुतिमधुरदलैः सच्छ्रुतिर्वाक्यजालैः
यत्र त्रैलोक्यमेतन्मिलितमिव पुरो भाति भाभिस्तदीयैः ।
सत्यं नित्यस्वभावं मधुमृदुविमलं "भूर्भुवः स्वर्वरेण्यम्"
भर्गो देवस्य" नित्यं वयमिहमनसा धीमहि ध्येयरूपम् ॥

# संस्थानां मूलं तत्वम् ।

अथ वयमत्र किञ्चिन्मात्रं संस्थानां मूलमालोचयितुमुद्यताः स्म। तत्र पूर्वं समुदेति चेतसीदं यत्किमिति संस्था नाम तत्रोच्यते, यदा खल्वत्र जगति बहुधा विभिन्नेषु जनेषु सर्वत्र कर्मणि सर्वेषामशक्ततया खञ्जान्धन्यायेन सामाजिकी समुत्पन्ना स्थितिस्तदा बह्वयः किल रीतयस्ततः सरसोधारा इवाभितः संप्रवृत्ताः। केनचिदेताः कालेन जना रूढ़ितया रीतीनभ्यवृणवन्। ततो लोकानामसमरूचितयाऽथ तन्मतीनां विकासेन च न स्म रोचन्ते सर्वेभ्यस्ता एव पुरातन्यो रीतयः। अत एव ते नूतान्नूत्नानाविरकुर्वन् पथ इह संसारयात्रायां निगताधित्रिभिः क्लेशैर्जीवनमत्यवाहयितुम्। किन्तु न खलु एक एवास्ति कदाचिदपि समर्थः सर्वेषामपि चलतां सामाजिकानां स्रोतसां विरुद्धं संचारयितुं नवीनं स्रोतः। अत एव सोऽयं नवीनस्य पथः प्रादुर्भावकः स्वव्याख्यानादिकैः कांश्चिदात्मनोऽनुकूलां सम्मतिं विधातुं प्रयतते। अत्र यदि किमप्ययं सफलः स्याद्यदि जनास्तेनोक्तमध्वानं सम्यक्तया जानीयुरथचैनमुपयुक्तमप्यवगच्छेयुस्तर्हि ते तमनुकुर्वन्तस्तदनुयातारो भवन्ति। एवं गते किञ्चिद्विशिष्टमध्येतुमुद्देश्यमेषां संगत्य स्थितानामेकत्र कर्मणि प्रयतमानानां नराणां संस्थेति संज्ञोपगीयते। एवस्माभिर्वयं मन्यामहेयत्स्पष्टमस्त्यवगमितं किमिति संस्था नाम। एवं विधानां संस्थानां न खलु पूर्वस्मिन्नेवासीत्काले आवश्यकता किन्त्विदानीमपि तास्तद्वदेवाभिकांक्ष्यन्ते यथैतास्तस्मिन्नवसरे सुखेन स्वागम्यन्त। यतो नेदानीमपि सर्वे सम्यक्तयानिर्णयपथमनुसरन्ति खल्वर्थाः, अथच कालवशात् पाश्चात्यसभ्यतावाताहताऽस्मदीया भारतवननवाङ्कुरा इत्थमतितरां सन्ति वेपमाना यन्न तेऽनुभवमात्रं प्रमाणं मन्यमानाः प्रचलितास्विह पुरातनीषु रीतिषु तथाविधां श्रद्धां दधति यथा खलु पूर्वेऽस्मदीयाः समभवन् श्रद्धधानाः जनाः। अतएव भावानां विविधत्वादथ जनानां भिन्नरुचिमत्वाच्च नानाविधा नवीनाः खलु काद्यन्ते संस्थाः। इतीदमेवमनस्याधाय कि-

ज्ञिसंस्थानामुन्नतिमूलमालोचयितुमस्मिन्प्रवृत्तौ ऽग्रे लेखनीमुपनर्तयितुम्।

तदितः संस्थानामङ्गानीदानीं प्रकाश्यन्ते

| संस्थानाङ्गानि | कासांचिदपि संस्थानामात्मेन्द्रियशरीरवत् त्रिण्यङ्गानि भवन्ति उद्देश्यं, साधनं संस्थापकाश्चेति। एषामेवोन्नतौ संस्था अभ्युत्कृष्यन्ते। न कश्चिदप्यस्त्युपलक्षिता |
|---|---|

हस्तपादोर्वादिभिरङ्गैर्विहीनस्य नष्टेन्द्रियस्यापहतात्मशक्तेर्वा सम्यगिह संसृतेः समरभूमिषु स्वस्थतया स्थितिः। एवमिह सर्वा अपि संस्थाः शक्या दृढं स्वाङ्गैःसंस्थापयितुं, नोचेद्बलवतीनामिहान्यासां संस्थानां जीवनप्रयासे सोन्मत्तैः करिभिरासेवितायां वनभुव्यङ्कुर इव न कामप्याशालतया समाश्रयणीयां स्थेयसीमासादयिष्यत्यासनाम्। अतो निर्णीतो ऽयमर्थो यत्संस्थानां स्थिरमासनमापादयितुमावश्यकं यत्तासामङ्गानि यथाशक्यं भोजनाच्छादनादिकै र्दृढयितुमर्हाणीति। अतो ऽग्रे कथमेतदापाद्यते कार्यमिति किञ्चिदिवाङ्गानि प्रविभज्य स्पष्टमत्र समुदीर्यते।

| संस्थापकाः | तत्र सर्वतः पूर्वं संस्थापकं विहितमङ्गं विचारास्पदमानयामः। के खलु संस्थापका इत्युदिते प्रश्ने उत्तरयामो यन्नवीनस्यार्थस्य प्रसिसारयिषवस्त इति। कुत्रचित् पूर्वमेवावो |
|---|---|

चाम यत्संस्थानां संस्थापकास्तासां शरीरवद्वर्तन्त इति। यथा ह्याधार इव वर्तमाने शरीरे विधुरे सति नात्मा नापीन्द्रियाणि किञ्चिदपि कर्म समर्थयन्ति तद्वदेव संस्थापकानामयोग्यतया बह्व्यः किल संस्थाः वालुकायां निर्मितं मन्दिरमिव बहुधा समभज्यन्त। अतः संस्थानां स्थैर्यमापादयितुमावश्यकं यत्तासां संस्थापकै रविकलैर्भवितव्यमिति। तेषु प्रतिदिवसं प्रतिक्षणं मलिनानालस्योत्पादकान्शुद्धान् तामसान्भावान् परिशोधयन्नित्यमात्मनिर्भरान्नवीनोत्साहप्रवाहो निस्यन्दनीयः। यथा वाम्भोनिधेर्वीचिभिरिव तेषां मनस्तरङ्गैर्मुहुर्मुहुरधो यातैरपि पुनर्नैजं पदमधिगमनीयम्। अथ च नित्यं तेषामग्रे दिनकरवद्दीप्यमानमुद्देश्यं तनुराजतां येन ते न कथमपि मार्ग

भ्रष्टा इतस्ततो भ्रान्ताः सञ्चरन्तु । नित्यं तैर्निजकर्तव्यपालकैरेव भवितव्यं न पुनः परकर्तव्यविसूचकैः। एते हीर्षालवः प्रायशः संस्थामनुत्कर्षयन्त्येव, यत एते खलु कर्मस्वन्यानपश्रित्य नवीनमेवोद्घाटयन्ति मार्गानथ च संस्थोज्वलत्वं नाम पुनः संस्थापकानामेकमत एव प्रतिनिवसति ।

**उद्देश्यम्**

इह खलु सामाजिकानां तिस्रोन्नतयो भवन्ति आत्मिकी, मानसिकी, शारिरी चेति । इममुन्नतीनां त्रिकमाश्रित्योद्देश्यानामपि त्रयो भेदा भवन्ति आत्मिकीमुन्नतिमाश्रित्य धर्मतन्त्राणि, मानसीमुन्नतिमाश्रित्य विज्ञानतन्त्राणि, शारीरीमाश्रित्य राज्यतन्त्राणि चेति, प्रथमा धर्मतन्त्रा यथार्यसमाज बौद्धमठादयश्च, द्वितीया विज्ञानतन्त्रा यथा विज्ञानपरिषदादयस्तृतीया राज्यतन्त्रा यथाऽत्रभारते कांग्रेसादयः।

संस्थानामुद्दिष्टो वा मार्गो यावद्दीप्यमानः सर्वैरपि स्पष्टं नोदीद्यते तावत्संस्थाया दृढत्वमपि नोपकल्प्यते। यतोऽन्धतमसि स्थिता मार्गा न खलु कदाचनापि गन्तृभिरुपलभ्यन्ते ऽश्चते ततोभ्रष्टा भ्रान्ता इव संचरन्ति अतएवयदि कापि संस्था सुरक्षणीया वास्याउपयोजनीया वास्याउन्नयनीया वा स्यात्तर्ह्यवश्यं संस्थाया लक्ष्यं निश्चायनीयं विशदनीयं सुतरां व्यञ्जनीयं च ।

उद्देश्यानां विपरिणामो ऽपि संस्थायाः जीवनवृद्धावत्यर्थं प्रयोजनीयः प्रयोगो येन न फलमधिगम्य बहुधा यथा कर्मिणां प्रयत्नान्यस्तमिवानुयान्ति तद्वदेव साधनीयं साधयित्वा संस्था अपि शिथिलायन्ते। अतएतं शैथिल्यं निराकर्तुमुद्देश्यान्यवश्यं खलु काले काले विपरिणमनीयानि

**साधनम्**

अथेदानीं तृतीयस्याङ्गस्यव्याख्याने न विपश्चितमस्ति खलु बहुवक्तव्यमत्रभवतां वाचकमहोदयनांम् इदमेवा ऽस्ति वक्तव्यं यदुद्देश्यानुकूलं साधनान्यपि त्रिधा भिद्यन्ते यथा धर्मतन्त्रे सत्युद्देश्ये आत्मनसमुन्नतिकराणि यज्ञतपोदानादीनि, विज्ञानतन्त्रे सत्युद्देश्ये मनस

समुन्नतिकराणि रसक्रियाभवनादीनीन्यथ राज्यतन्त्रे सत्युद्देश्ये शारीरपराक्रमोन्नतिकराणि सैन्यादीनीति—

एवमहं जानामि यन्मया ऽत्र का संस्था कानि च तासामङ्गानि, कति च तासां भेदाः कथं च संस्थोन्नत्यर्थमङ्गान्युन्नीयन्ते इति सकलमुल्वणमुपपादितमितिमत्वात्र ससन्तोषमिमं लेखमवसादयामि

# देशभक्तो मेजिनिः

अयि वाचकमहाभागाः—

अद्य वयं स्वल्पे ऽस्मिन् लेखे देशवीरस्य हरिवर्षे विदितकीर्तेः मेजिनेः कार्यंचरितं च लिखितु मुद्यताः स्म। को न जानाति महतो ऽस्य पुरुषरत्नस्य महत्वम्। अद्य हि हरिवर्षस्य प्रत्येकं पुरुषस्यान्तरङ्गे काचिदपूर्वामेव प्रस्फूर्तिमुत्पादयति सुगृहीतनामधेयस्य तस्य नाम। राजनीतिज्ञानां देशभक्तानां साधुचरितानामन्यतमो ऽयमित्यत्र न केऽपि संशेरते। इटलीप्रदेशे भगवत्याः स्वातंत्रदेव्याः प्रसादकारणमेनमेव मन्यन्ते। विद्वांसः अतएव एतादृशस्य पुरुषसिंहस्य कार्यं चरितञ्चा वश्यं निखिलैरपि जनैः श्रोतव्यं श्रुत्वाच तन्नाचरणमपिविधे यमेव।

श्रीमान् मेजिनिः इटली देशान्तर्गते 'जनोवा' जनपदे समुत्पन्नः। बहुभिरलौकिकैः गुणैः शुद्धो मणिरिव बाल्य एवायमात्मानं महान्तमबवोधयतिस्म। अधुनैव तस्य स्मृतिशक्तिः विचाराश्चातिगभीरा आसन्। स च खलु निजदेशस्यकलुषितां दुःखदायिनीं दशामवलोक्य तस्या अपनोदाय धृतासितवसनः महान्तं प्रयत्नं कर्तुमारेभे। आस्ट्रिया प्रदेशस्य तत्र शासनप्रकारश्च न तस्य तिरोहितआसीत्। एतदर्थमेव स विविधदेशानां चित्राणि तेषामाक्रान्तीनां सविशदं वर्णनमधीत्य प्रतिदिनं बालभानुरिव समुदयगिरिमारुरोह। स्वीयमातृभूमेः अज्ञानतिमिरावृतां कलहाकीर्णां पराधीनतापीड़िताम‌वस्थां दर्शं दर्शं तस्य चेतो महत् चापल्यमभजत्। सत्यमुक्तं केनचित् कविना—

'जननी जन्म भूमिश्च स्वर्गादपि गरीयसी'।

अतएव मेजिनिनापि महान् सम्बन्धः स्वदेशेन सह कृतः। अतिप्रलोभितो ऽपिसन् न काञ्चिदपिस्त्रियमुपयेमे। स च पुनः कथयति स्म यन्मदीयः सम्बन्धः केवलं देशेनैव सह विद्यते नान्येन अतएवाहं न कयाचित्सह संबन्धं करिष्यामीति

पाठकाः!

इयमस्त्यसीमता देशभक्तेः। मेजिनेः जीवनस्योद्देश्यमिदमेवासीत् यत् स कथं कथमपि स्वीयदेशमज्ञानात् विदेशीयशासनाच्च स्वतंत्रीकुर्यादिति। एतदर्थमेव तेन निजजीवनं धृतम्। अतः परं तेन कानि साधनानि निजोद्देशस्य पूर्तये कृतानीति विचार्यते।

बाल्यत एव स अपूर्वां लेखिनीशक्तिं सरस्वतीप्रसादञ्च प्राप्तवान् नहि स धनिक आसीत् नापि राजनीतिज्ञविस्मार्कवत् कुलीन एवासीत् सचातिदरिद्रः केवलमेते द्वे शक्ती एव दधानः कार्याय परिकरमबध्नात्। तेन विचारितं यत् प्रत्येकं कार्यं सामूहिकशक्तया एव पूरितं भवति। नहि सति द्वेषादिवैरिणि शक्यं कर्त्तुं किंचिदपि कार्यम्। अभूत्तत् समये कारबोनारीनामिका काचित् सभा, यस्यां च द्वित्रा एव जना विविधा आमंत्रणाः कुर्वन्तिस्म। अस्याः सभासत्त्वं प्राप्तुमिच्छता जनेन एको महान् धनराशिर्देयोऽभूत्। मेजिनिश्च तावद्द्रव्यं दातुमसमर्थोऽपि कुतश्चदानीय तद्धनमदादेव। एवञ्चास्या सभायाः सदस्यत्वं प्राप्य मेजिनिः साहसमूर्तिः अभिनन्दनीयेन प्रबलेनोत्साहेन कार्यमकरोत्। एकदा च स विविधा आमंत्रणाः करोतिस्म तदा राजकीयपुरुषैः गृहीत्वा बन्धनागरे निक्षिप्तः। मेजिनिरपि तत्तद्दुःखं सहमानः कांचिदन्यामपि 'तरुणटली, नामधेयां सभां स्थापयितुं तत्रैव विचारयतिस्म। अहो धैर्यं मेजिनेः! यश्चाधुनापि न निजपरमोद्देश्यं जहौ। अयं तस्य विचारश्च पश्चात् कार्येऽपि परिणत एव।

अहो बुद्धिकौशलं तस्य यश्च स्वगुप्तसभायाः साहसप्रदं तरु णेटली नाम संस्थाप्य सर्वेषां निजदेशीयानां साहसवल्लीं वर्धयतिस्म ।

अस्याः सभायाः उद्देश्यं जनानामज्ञाननाशः स्वातंत्र्यवृद्धिश्चासीत् । अस्याः सभायाः सभासदा मदं मदं प्रजानां सम्मुखं निजनायकस्यैतान् चतुर उपदेशान् निवेशयन्तिस्म ।

तेषु प्रथमः इटलीप्रदेशस्य प्राचीनसभ्यतायाः गौरवविज्ञानमासीत् । यत् सत्यं कस्य देशभक्तस्य चित्तं निजामभिरमणीयां सभ्यतां ध्यात्वा नोद्वेलयति । इटली प्रदेशस्थैश्च यदा निजस्वर्णमयी सभ्यता विज्ञाता तदा तेषां मनस्सु: अपूर्वएव साहसः समुदितः । तैरिदानीं विज्ञातं यदस्माभिरपि निजस्वातंत्र्यार्थं पूर्वजनवत् प्रयत्नो विधेय इति । द्वितीय उपदेशश्च स्वाधीनतापराधीनतयोः गुणगानमासीत् । तयोः लाभालाभश्च साधुतया जनैः ज्ञातः । अतएव तदर्थं प्रवृत्ति रपि सुलभैव भूतेति ।

तृतीयोपदेशश्चान्यदेशानां स्वाधीनकथाश्रावणमासीत् । चतुर्थ एल्प्सनामकस्योत्तुङ्गस्य पर्वतस्योच्चत्वप्रदर्शनं नाम । जनाश्च तावत् पर्वतस्यौन्नत्यं पश्यन्तः स्वात्मनः उच्चान् कर्तुमुद्यता भूताः । इयमासीत् तस्यकार्यशैली । द्वितीयश्चायमुपायस्तेनावलम्बितो यत् । सभावत् पत्रमप्येकं स निरसारयत । पत्रद्वारेण चायं निजोपदेशान् शनैः शनैः प्रचारयामास ।

वाचकाः—

नहि कस्यापि कार्यस्य सफलता दुःखमन्तरेण भवति । अतएव मेजिनिना महान्ति दुःखानि विविधा यातनाश्च निजोद्देश्यपूर्त्यर्थं सोढ़ाः तस्य सर्वमपि जीवनं विदेशेष्वेव यातम् । नहि बहुकालं स निज मातृभूमिं सनाथाम करोत् । स च महात्मा बहिरेवाजन्म विचरन् विविधा नुपायान् चकार । राज नीति विशारदः शार्मण्यदेशीयः मोल्टे महाशयस्तं प्रशस्य न विरमति । अद्यच सर्वेऽपि देशस्थास्तस्य बुद्धि

कौशलं प्रशंसन्ति । एवंव्यतीते काले सम्पन्नायाञ्चौचित्यभूमौ गेरिवाल्डीकेवूरप्रभृतिभिः क्षात्रबलेन नीतिबलेन चेटलीप्रदेशः स्वतंत्रीकृतः । एतावपि द्वौ वीरौ देशभक्तौ राजनीतिज्ञौ चास्ताम् ।

वाचकाः—

एवं च दर्शितं मया प्रकृति वल्लभस्य परमधार्मिकस्य मेजिनेः समासतः कार्यम् । एतेन स्फुटं सिध्यति यत् अतिकठिनं दुर्लभमपि कार्यं बुद्धया नीत्या, धैर्येण कर्तुं शक्यत एव । नहि अयं महापुरुषो बिस्मार्कवत् केवलराजनीतिज्ञ एवासीत् परं महान् धार्मिकः सच्चरित्रो ऽप्यासीदेव । तस्याचित्यप्रभावां धर्मश्रद्धां दृष्ट्वा प्रत्येकं जनः मुक्तकण्ठं प्रशंसति । तेन मनुष्याणां कर्तव्याकर्तव्यविषये पुस्तकमपि एकं लिखितं यत्रच जातीनां मनुष्याणाञ्चोद्देश्यवर्णन मुपलभ्यते ।

तेन प्रतीयते यत् स्वाधीनतायै पूर्वं शिक्षिष्यते पश्चात्स्वाधीनता स्वयमेवा यास्यतीति शिक्षां विना स्वाधीनता विषवत् विपरीत मेव प्रभावं करोतीत्यलं पल्लवितेन ।

———

# गवां पालनम् ।

साधारणतया वयं पश्यामो यत् सर्वप्राणिनः इष्टकार्ये प्रवर्तन्तेऽनिष्टाच्च निवर्तन्ते। बहवो जनाः दुःखहानाय प्रयतन्ते, सुखं स्यान्नवा-स्यात्। अन्ये च सुखोपलब्ध्यै इतस्ततः करचरणं चालयन्ति। यत्र क्षणिकमपि सुखं ते पश्यन्ति तत्रैव गच्छन्ति परिणामे दुःख मेव स्यात् अतः प्रतीयते लाभालाभपुरस्सरमेव प्रवृत्ति निवृत्ती भवतः। अतः यस्मिन् विषये जनाः प्रवर्तनीयाः पूर्वं तस्य लाभाःप्रदर्शनीयाः तद-भावे च याः हानयस्ताः प्रदर्शनीयाः।

अद्यत्वे जनाःप्रायशो ऽनभिज्ञाः सन्ति, यद्गवां पालनेन के लाभाः, भवन्ति परंते केवलमिदं जानन्ति यत् गवांपालनेन व्यर्थं बहुव्ययो भवति, प्रज्ञावद्भिरेव ज्ञातुं शक्यते यत् गवां पालनेन के लाभाः सन्ति। अद्यत्वे भारते प्रतिग्रामं प्रतिनगरं शतशः सहस्रशश्च गावः उपलभ्यन्ते, किमेतावता ज्ञातमिदं भवति यद्भारते गोरक्षा समधिकास्तीति। मम मते नैतत्पालनं, पर-मियं गोहत्या नाम। यथा मुगलकाले प्राणदण्डेन दण्डनीया अतिक्रूर-रीत्या हन्यन्तेस्म, तथैवाद्यत्वे पानाशनं विना गावो हन्यन्ते। यदा गवां पालनमभवन्न तदा अस्थिपिंजरमात्रावशेषाः दृश्यन्तेस्म जनाः भारते। नचबुभुक्षिताः सन्तः पापमाचरन्तिस्म। यद्यप्यरक्षणे बहूनि कारणानिसन्ति, तथाप्येतन्नोपेक्षणीयम्।

रोग काले जनाः दुग्धं नोपलभन्ते, यद्दुग्धं पण्यवीथिकासु गोपाल-गृहेषु चोपलभ्यते तद्व्याधि परिपूर्णं भवति।

दुग्धमन्तरास्माकं कार्यं नैव प्रचलति। अद्यत्वे भारते समयानुसारं

प्रतिगृहं गवां पालनं दुःशकमस्ति, भोजनस्य सेवायाश्चाभावः। किंच धर्मं मत्वापि गाःपालयितुं नोद्यतन्ते । अतोहं प्रदर्शयामि धन-लाभो ऽप्यस्ति गवां पालने, ।

तच्चेत्थम् ।

वैज्ञानिकरीत्या गुणप्रदर्शनपूर्वकं यदि पश्यामो भारते पंचधा अत्यु-त्कृष्टाः गाव उपलभ्यन्ते, तासां याः लाभकारिण्य स्युस्ताः पालनीयाः। यद्यपि भारते गोशालाः सन्ति परं तासु सम्यक्पालनं न भवति। संक्षे पेण तासां विवरणमधो दीयते ।

१· हांसीहिसारौः—पंचाम्बुप्रान्ते हांसीहिसारनामकौ नगरौ स्तः। तत्रस्थाः गाव आकृतिपरिमाणपराक्रमै· दुग्धाद्यपेक्षया च भारते सर्वोत्कृष्टाः भवन्ति । तत्रस्था वृषभाः सार्द्धत्रिहस्तमुन्नताः भवन्ति। विशाल भालो उन्नतककुदा विस्तृतवक्षस श्च भवन्ति। ते रथादियानेषु प्रयुज्यन्ते पुष्टतातिशयतया महान्तमपिभारमुद्वोढुं क्षमन्ते । तत्र-त्याः गावः महतीं दुग्धराशिं प्रददति, तद्दुग्धं पुष्टिकरं स्नेहबहुलं च भवति। अन्यत्र नीयमानानां तासां दुग्धराशिः हीयते। तत्र ताः गावः पंचाशद्रूप्यकादारभ्याशीति रूप्यकैः क्रेतुं शक्याः। प्रत्येको बलीवर्दश्च अशीतिरूप्यकादारभ्य द्विशतपर्यन्तम् ।

२. नागपुरम् :— मध्यप्रदेशे नागपुरमस्ति, तत्रत्याः गावः सामान्य-तया महतीं दुग्धमात्रां प्रददति। परंतस्मिन् स्नेहस्य न्यूनतया पुष्टि कारिता न भवति। परिणाहे तत्रस्था गावः हिसारदेशीयगोतुल्या भवन्ति तत्रस्था वृषभाः दुर्बला किन्तु वेगवन्तो भवन्ति, अतएव भारं वोढुं न

शक्नुवन्तः रथादियानोपयोगिनो भवन्ति। प्रतिगावं षष्टिरूप्यकादारभ्यशतपर्यन्तं,प्रतिवृषभंच द्विशतादारभ्य चतुःशतपर्यन्तं क्रयव्ययः।

३. नैलोरः—नैलोरनगरः मद्रासप्रान्तेऽस्ति। तत्रापि गवां पालना भवति, तासां परिमाणोपि हिसारगोसदृश एव भवति, परं ताः किंचिदल्पं दुग्धंप्रददति। तासां दुग्धं स्नेहबहुलं पुष्टिकरं च भवति। वृषभाः पुष्टाः भवन्ति ते भारमप्यधिकं वहन्ति। तत्रस्था धेनवःशतादारभ्यत्रिश तरूप्यकैः, बलीवर्दयुगलं च सार्द्ध त्रिशतरूप्यकैः क्रेतुं शक्यते॥

उपरिवर्णितानां गवां दैनिकीदुग्धदानस्य मध्यमावस्था दशप्रस्थादारभ्य षोडशप्रस्थमितं विंशतिप्रस्थमितंचास्ति।
सामान्यतया पंचषमासानन्तरं गवां पयः शुष्यति परं हिसारनगरे याः पाल्यन्ते ताः दशद्वादशमासपर्यन्तं दुग्धं ददति। तच्चस्नेहबहुलं भवति, एवं वत्सप्रसवानन्तरं अधिकादधिकं चतुःसहस्रप्रस्थमितं पयः ददति।

४. गुर्जर सौराष्ट्रौः—मुम्बई जनपदे गुर्जरसौराष्ट्रौप्रान्तौस्तः तत्र हिसारवदेव गावः पाल्यन्ते, ताःअतिमधुरं स्निग्धं दुग्धं ददति यच्च मात्रायां किंचिदल्पं भवति। बलीवर्दाःहलादिषुप्रयुज्यन्ते। तेतत्र प्रत्येकं षष्टिरूप्यकादारभ्य द्विशतपर्यन्तेन धनेन क्रेतुं शक्यन्ते।

५, गुडगेरानगरः :—मुलतान समीपे गुडगरानगरोस्ति, तत्रगावः पाल्यन्ते तास्तावदुन्नता न भवन्ति, ताःअष्टप्रस्थादारभ्य दशप्रस्थमितं दुग्धं ददति। ताःत्रिंशद्रूप्यकादारभ्य षष्टिरूप्यकैः क्रेतव्याः भवन्ति।

सामान्यतया सर्वत्रापिभारते गावः पाल्यन्ते परमुपरि वर्णितानि

नगराणि गवां पालनाय प्रसिद्धानि सन्त्यतस्तेषामुल्लेखोऽत्र कृतः। यच्च क्रयविक्रयमूल्यं निर्दिष्टं तत्तेषुस्थलेष्वेव भवति, अन्यत्र तेषां मूल्यं-वर्द्धते। यथा हिसारनगरस्थाः गावः कलिकातायांत्रिगुणेन चतुर्गुणेन वा मूल्येन प्राप्तुं शक्यन्ते।

बङ्गीया गावः अतीव लघ्वाकृतयो भवन्ति। परमद्यत्वे हिसारादिनगरेषु ताः गावो नीयन्ते तत्र तेषांपालना भवति। यास्तत्रस्था गावः सन्ति ताः सार्द्धहस्तं द्विहस्तमितं चोन्नताः भवन्ति। प्रस्थस्य चतुर्थभागादारभ्य प्रस्थमितं ताः दुग्धं ददति। ताः षड्रूप्यकादारभ्य द्वादश रूप्यकैः क्रेतुं शक्यन्ते।

यद्यप्यस्माकं धर्मशास्त्रेषु दुग्धादिविक्रयं निषिद्धमस्ति तथापि समयानुसारं कार्यं कर्तव्यम्। प्रत्येको जनः गाः पालयितुं न क्षमः धनानामभावात्। ये पालयन्ति ते सर्वाथप्यज्ञाः सन्ति अतः सम्यकतया लाभं न प्राप्नुवन्ति। जनेषु बहवो रोगाः पशूनां दुग्ध द्वारेण समायान्ति तच्चेत्थम्।

दुग्धमः—ग्राम्यपशुषु मलसंसर्गेण बहवोरोगाः समुद्भवन्ति, गोपालाः तेभ्योऽनभिज्ञाः भवन्ति। रुग्णानामपि गवां दुग्धं ते शुद्धे दुग्धे सम्मेलयन्ति। रोगकृमयो मांसे दुग्धे च शीघ्रतरं वर्द्धन्ते। अन्यच्च, पूर्वं, गोपालाः दुग्धे जलं मिश्रयन्तिस्म तेन विशेषा क्षतिर्नासीत् तस्य परीक्षार्थं यंत्रमेकं निष्पादितं, दुग्धमापकं ( लैक्टो मीटर ) ततश्चान्ये उपायाः आविष्कृताः। बहवो गोपाः महिषीदुग्धे जलं सम्मेल्य गोदुग्धवत् व्यवहरन्ति। अन्ये चूर्णजलं ( चूने का पानी ) सम्मेलयन्ति, अपरे खण्डयुक्तंजलं, इतरे चूर्णकजलं ( मैदे का पानी ) एवं महतापि प्रयत्नेन वयं ज्ञातुं न शक्नुमः यद् दुग्धे कीदृग् मालिन्यमस्ति॥

पीतवर्णं दुग्धं स्नेहबहुलं पुष्टिकरं च भवति, परंशुभ्रं स्नेहो न भवति तथापि पाने हित करं भवति।

बहवोजनाः कृत्रिमोपायैः दुग्धं संवर्द्धयन्ति । उष्णजले तुषं, शर्करां च सम्मेल्य तं जलं पाययन्ति येनशरीरे जलवृद्धिर्भवति। अपरे लवणमधिकं ददति तेनगावो बहुजलं पिबन्ति एवं दुग्धंवर्द्धते, परं तद्दुग्धं नैव हितकरं भवति जलबाहुल्यात्।

दुग्धरक्षणम्:—उष्ण प्रदेशेषु दुग्धं स्वल्पकाल एव दधि परिणमते, तस्यैतदेव कारणं यत् कृमयः (वैक्टीरिया) शीघ्रं पुष्टिं प्राप्नुवन्ति परं शीतस्थलेषु दुग्धं रक्षितुं शक्यते।

निर्वातस्थले पिहितपात्रे वा दुग्धं रक्षणीयमथवा कृमिनाशका औषधयः प्रयोक्तव्याः। नूतनं दुग्धं क्वाथं विना पाने हितकरं भवति यदिगावः रोगरहिता स्युः। यदिकालान्तरे प्रयोक्तव्यमस्ति तदा दुग्धं समीचीनतया क्वाथयित्वा प्रयोक्तव्यम्। प्रयोगकाले तापांशं, पंचसप्तत्यंशात् हीनतापांशं शतांशतापमापकस्य न स्यात् तदा रोगकृमयो म्रियन्ते, यद्दुग्धं हट्टेषूपलभ्यते तत्सर्वथापि रोगपूरितंभवति तन्न जातुचिदपि व्यवहर्तव्यम्॥

---

## मातृवन्दना:

चरणयुगं प्रणमामि ते सुखदायिनि मातः ।

नन्दनकाननतो ऽधिकमङ्कं, सततशयानो विगतकलङ्कम्
प्रेमपयांसि पिबामि ते स्तनपायिनि मातः ।

सकलसुरासुर कृतमहिमानम्, सुरतरुसुमनःस्तवकसमानम्
चरणरजो निदधामि ते निज मूर्धनि मातः ।

गायं गायं तव गुणग्रामम्, मीलितनयनश्चिरमभिरामम्
देहमिमं विस्मरामि ते, पदयुगमुपयातः

वत्सलतायाः कल्पलतायाः सूक्तिसुकुसुमैः सुतसहजायाः
पद युगलं महयामि ते सुतनन्दिनि मातः ।

वीक्ष्य तवाहं क्वचिदपकारम्, कर्तुमशक्तस्तत्प्रतिकारम्
नयनजलं विजहामि ते पदतलमुपयातः ।

शरदि, निदाघे, प्रात, रुषायाम्; प्रावृषि, माघे, किञ्च निशा-
याम् दुःखकथां कथयामि ते प्रतिगृहमुपयातः ।

तव सेवाव्रतपालनधीरः, शस्त्रैः शोणितशोणशरीरः,
प्राणमपि प्रददामि ते वरदायिनि मातः ।

निखिलसुताननलालनचटुलां, रिपुवक्षःस्थलधृतपदयुगलाम्

मूर्तिमिमां रचयामि ते प्रतिहृदयं मातः ।

# कर्मयोगः

योगस्य नाम सुस्पष्टमिदं भगवता पतञ्जलिना लक्षण किलाभिहितं यत् "योगश्चित्तवृत्तिनिरोधः" इति चित्तवृत्तीनां सुखदुःखमोहादिकानां सर्वथा निरोधे सति पुरुषस्य योगः प्रादुर्भवति। स खलु निरोधो द्विविधः साध्यो भवति ज्ञानयोगेन, कर्मयोगेन च,

तत्र कर्मयोगव्याख्यानात्पूर्वं स्वल्पमिव किञ्चिज्ज्ञानयोगं विवृणुमः आत्मतत्वं सम्यक् चेतस्याधाय तस्य नित्यत्वं,प्रकृतेश्च कार्य्यविपरिणामित्वं, कार्यस्य वाऽनित्यत्वं, विलोक्य न खलु देहिनं प्राकृती कापि समर्थाऽस्ति शक्तिः पीडयितुं:—

यथाह भगवान् कृष्णो गीतायाम्:—

"नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः
' न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥१
'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते
'तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ,,

इति विचार्य सुखदुःखनिरोधः कर्तव्यः स खलु ज्ञानयोगो भवति।

इदं खल्वात्मतत्वमद्यत्वे युक्तया मतमपि जनानां न चेतःसु सम्यगाधानं कुरुते। अतो दुष्करतयाऽसाध्योऽयं विहाय सुकरः कर्मयोगपन्था अनुसरतव्यः। न खल्वयं पन्था सुकर एवेतिकृत्वाऽऽश्रणीय अपि तु आश्रयणीय एवेति कृत्वाऽऽश्रयणीयः। यतः कार्यते ह्यवशः कर्म सर्वैः प्रकृतिजैः गुणैरेतमाश्रित्य वादं न कोऽपि नैष्कर्म्यमत्र जगति समश्नुते। यदि कर्तव्यमिति कृत्वा कर्मयोगः समाश्रितः स्यात्तर्हि न कापि पुंसः क्षतिरथ च चामीकरं गन्धमयं प्रभूतमिव कि

श्चिदन्यदेवसौष्ठवं सम्पद्येत। अतोऽलमभिहितेन यत्सर्वैः कर्मयोगश्चा-श्रयणीय इति। अथ कथमयं पन्था अनुसरतव्य इत्यग्रेऽभिदधामः।

जनिमागतोऽयं जन्तुः कथं प्रभ्रश्यते, इत्येनमङ्गीकृत्य भगवा-नाहः—

**ध्यायतो विषयान् पुंसः संगस्तेषूपजायते**
**संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ १ ॥**

**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ २ ॥**

एवमन्ते यदाबुद्धेर्नाशो भवति तदा जनोऽपि हन्त स्वाऽस्तित्वमेव रहयतीति महान् शोकसन्दोहः। अयं खलु विनाशो न भवत्वेतदर्थमेव ज्ञानयोगःकर्मयोगो वा शिक्ष्यते स इदानीं बुद्धेर्नाशः कथं भवतीत्यत्राह भगवान् यत् "नाऽस्तिबुद्धिरयुक्तस्य" अर्थात् अयोगिनो जनस्य बुद्धिर्नष्टा संजायत इति। अतः स्वीयां बुद्धिं स्थापयितुमात्मानं वा स्थापयितुं जनेनावश्यं योगः समाश्रयणीय इति। अयमिदानीं प्रादुर्भवति प्रश्नो यत्कीदृशोऽयं योगो नाम। तत्राह भगवान् यत्:—

## 'समत्वं योग उच्यते'

अर्थात् सर्वत्र वस्तुनि समानैकाकाराख्यातिरेव योगः। निदानमत्रेदं वर्तते यद्यदा सर्वत्र समाना मतिरुत्पत्स्यते तदा पुंसो विषयाणां ध्यानं न भविष्यति, अथाध्यायतश्च पुंसः संयोगो नाभिजायते, असज्यमानस्य च कामादयो न प्रभवन्तीत्येवं सर्वोऽपि क्रमो विनश्यति।

तथ्यमुक्तं समत्वं योग उच्यत इति, किन्तु तदिदं समत्वं कथमुत्पा-

दनीयं स्यादिति तु किमपि न ज्ञायते तस्योपायः कश्चिदनुयोक्तव्योऽस्ति तत्राह भगवान्ः—

**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः**
**तानि सर्वाणिसंयम्य युक्त आसीत मत्परः॥ १॥**

अर्थादेकध्यानपरो भूत्वेतस्ततो धावमानानीन्द्रियाणि निरोद्धव्यानि, तेन विषयेषूपरागो नभवत्यथाऽनुपरज्यमानस्य च स्पष्टं समत्वमाविर्भवति ।किन्त्वयमेवा ऽस्ति दुस्तरःपाथोनिधिरिन्द्रियनिग्रहो नाम यत्राशक्तः सन्सर्वो ऽपि जनो निलीयते । तदधुना कथमत्र तरणेर्गतिर्विधातव्या येन दुस्तरो ऽप्ययं सागरः समुत्तीर्येत तत्राह भगवान्ः—

**इन्द्रियाणां हि चरतां यन्मनो ऽनुविधीयते**
**तदस्य हरति प्रज्ञां वायुर्नाविमिवाम्भसि ॥ १॥**

अयमस्त्यस्याभिप्रायो यद्यथा वायुर्नावमितस्ततो भ्रामयत्येवं मन इन्द्रियाणि भ्रामयतीति अर्थात् यदीन्द्रियैः साकं मनोऽपि चञ्चलतामाश्रयेत तर्हि निश्चितं यत्संसारपारावाराध्वनि पतितस्तरणिर्वायुनेव विलोडितः समारूढं जनमपि साकमादायाधस्तलं गमिष्यतीति ।एवमिन्द्रियजयार्थं पूर्वं मनसो जयो विधातव्य इत्यागतम् ।

अथ मनसो जयः कथमित्युत्पद्यमानायां शङ्कायामाह भगवान्ः—

**"व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन**
**बहुशाखा ह्यनन्ताश्च बुद्धयो ऽव्यवसायिनाम् ॥ १ ॥**

अयमभिप्रायो यत्स्तो बुद्धीनां खलु द्वौ भेदौ तत्रैका व्यवसायात्मिकाऽऽख्यायतेऽपराऽव्यवसायात्मिका तत्र पूर्वा तादेकैव

भवत्यपरा बहुशाखावती चेति । अर्थान्मनसो जयार्थं मनो यदा कस्मिँश्चिदेकस्मिन्कर्मणि संयोज्यते तदा संयोक्तुस्तत्रैका व्यवसायात्मिका बुद्धिरुत्पद्यते यदयमस्मद्व्यवसाय इदममस्मत्कर्तव्यमिति वा । किन्त्वव्यवसायिनां तावद् बुद्धयो बहुशाखाका भवन्ति, यथा इदमस्मदीयं कर्तव्यमयमनेन लाभो भविताऽथेयश्चानेन हानिरिति सर्वे विचाराः प्रादुर्भवन्ति । तत्रेयमव्यवसायिनां खलु बुद्धिर्हातव्याऽथच व्यवसायात्मिकैव समाश्रयणीया । अनेन प्रकारेण मनोऽपि पुरुषैर्विजिग्यते । यदि शक्यते यद्धर्म्यमिति कृत्वा किञ्चित्कृतं किन्तु तेनानेन कृत्येन लाभः कश्चिदपि न भवति तदा किं नः कर्तव्येनेति? अत्र भगवानाहः—

"नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्"

कर्म निष्फलं भविष्यतीति न कदाचिदपि भेतव्यमथ च नित्यं व्यवसायात्मिकीमाश्रित्यैकां बुद्धिमफलप्रेप्सुना कर्तव्यमितिकृत्वा कर्म करणीयम् । एवमेकत्र संयुक्तं मनो विजितं भवति । अनेन विजयेन दुर्गजयान्नगरजय इवेन्द्रियजयः सुकरः सम्पद्यते। इन्द्रियजयेन च विषयध्यानहानिस्ततो बुद्धेः स्थैर्यम् । एवं गतेऽप्रणश्यन्नरो जन्मबन्धविनिर्मुक्तः पदं गच्छत्यनामयम् ॥

## प्रभात पथिकः ।

विलसन्ति विराविणो वयः
परितो विस्तृतवृक्षपंक्तिषु
उषसि प्रतिबोधनीयतां
स्वयमेवोपदिशन्ति ते यथा ॥ १ ॥

मिथुनानि च पक्षिणां द्रुमे
बहु कूजन्ति हरन्ति मे मनः ।
रुचिरं नितरां च कोकिला
मधुरालापविशेषभूषिताः ॥ २ ॥

विरुतैरिव सूचयन्ति ये
भज चोत्थाय निजेश्वरं सदा ।
शृणु बन्धुजनस्य भाषितं
पथि गच्छन्तमिवाह्वयन्ति ये ॥ ३ ॥

कमलानि सषट्पदानि वै
कुमुदानामुपहासपूर्वकम् ।
विकसन्ति हसन्ति सम्प्रति
धिगहो रात्रिचरस्य जीवितम् ॥

कुमुदस्य स बन्धुरीक्ष्यतां
प्रभया यो मलिनप्रभोऽधुना ।

वद चन्द्र ! गता क्व चन्द्रिका
तव सा कान्तिमती प्रभोदये ॥ ५ ॥

न हि रात्रिचराः ससाहसा
वितथं नैव वचो मनीषिणाम् ।
अतिखेदमवाप्तवानहं
प्रियबन्धोस्तव निष्फलोदयात् ॥ ६ ॥

शिथिलं कुसुमं निपातयन्
पवनो वाति शनैर्हरन्मनः।
भ्रमणेषु मनो भवेदहो
शिथिलस्यापि जनस्य निष्कुटे ॥ ७

मृदुमर्मरशब्दशब्दितै
र्यमिनं याऽऽह्वयतीव वाहिनी ।
अतएव हि यान्ति सज्जना
न हि सत्कारपदेषु रूक्षता ॥ ८ ॥
अलसा शयने स्वपन्त्यहो
विमुखा धर्मपथात्क्वचित्क्वचित् ।
अयि भारतवर्ष ! ते प्रजा
किमुनाशस्य मुखे पतिष्यति ॥ १० ॥
विलयं गतमेव तत्तमो
निशि यस्मिन्मुनयोऽपि पीडिता ।

अधुना निजभक्तिमार्गतो,
भजमाना जगदीश्वरं स्थिताः ॥ ११ ॥

उदयः सवितुः प्रतीयते
न विलम्बेन च यो भविष्यति।
समयः स्तुतिजापकर्मणां
नियमेनैव च निर्गमिष्यति ॥ १२ ॥

अधुना तु वियोगकालिकं,
नम एवास्तु हि वाचकाय मे ॥ १३ ॥

प्रणयेन नयेन बन्धुता
भविता कुत्र न साधुसङ्गमे ॥ १४ ॥

# शान्ति युद्धयो र्व्यतिक्रमः ।

यत्र पृथिव्यां बहवः पुरुषा एतादृशाः समुलभ्यन्ते ये सहर्षमिदमाघोषयन्तो न विरमन्ति यत् "क्षात्रबलभाजामुपभोगयोग्यायां भूमौ युद्धमेव सकलवैभवभवनस्य प्रवेशद्वारम्, उन्नतिशिखरमधिरोढुमिच्छतां च प्रथमः सोपानदण्डः ; यो देशो रणचण्ड्याः प्रसादभाजनं स्यात्स एव निखिलमूर्धन्यत्वेन स्थातुमर्हति । किञ्च विस्तृतेऽस्मिन्समरांगणे निर्बलानां मरणमेव श्रेयो, बलवतां स्वाभाविकोऽयमधिकारो यत्ते निर्बलानतिक्रम्य सकलामपि वसुधामधिकुर्युः, न्यायानुमोदितस्तेषामयं दुर्बलातिक्रमो न केनाप्यत्याचारत्वेन शंकनीयः" तत्र केचिदीदृशा अपि सन्ति ये खलु शस्त्रसंघट्टनिस्वनमपि श्रोतुमशक्नुवन्तः, शोणितलवमपि पतितं सकम्पमालोकयन्तो हस्तमुद्यम्य मुहुर्मुहुराघोषयन्ति यत् "पशुजनोचितानि युद्धानि सर्वथापि परिहेयानि" । परमयि ! सदसद्विवेचकाः पाठकमहोदया वयमुभावपि नानुमोदितुं शक्नुमः ।

प्रथमं तावच्छान्तिवादिनामेव मतं यदा वयमालोचयामस्तदा प्रतीयते यत् सर्वकालाय शान्तिस्थापनं प्रति तेषामयं प्रयत्नो गगनरोमन्थवत्सर्वथा निष्फल एव ।

परिवर्तमानेऽस्मिञ्जगति न किमपि निश्चलम् । सर्वत्रापि प्राचीनस्य वस्तुनो नाशो नवीनस्य च प्रादुर्भावो विलोक्यते । न केवलमयं नियमः प्रकृतावेव संघटते मनुष्यजातावपि प्रत्यक्षी क्रियते । परमात्मना ऽभिनीयमाने ऽस्मिन्संसारनाटके क्रमशः सहस्रशो जातयः स्वकौशलं दर्शयितुं समागच्छन्ति परन्न काचिदपि चिरं स्थातुं शक्नोति । पटाक्षेपेण साकं सर्वथा तासामपि विनाशो भवति । अस्य परिवर्तनस्य मुख्यतमं कारणं वयं युद्धमुत्पश्यामः । परिवर्तनस्य महान्भागो युद्धैरेव क्रियते युद्धैनैव जातयः समुन्नतिमधिरूढाः अथैकेनैव च युद्धेन कासांचिञ्जातीनां तावानधःपातोऽभूद्यत्ते भूयः शिरोपि नोन्नमयितुमशक्नुवन् । अति प्राचीनतम इतिहासो नास्माभिः

ज्ञायते तथापि कृतयुगे देवासुरसंग्रामः, त्रेतायां रामरावणयोर्युद्धम्
द्वापरकाले महाभारतम् न कस्याप्यन्तरितम्। कलिकालस्य तु कथैव
का ? यावानितिहासो ऽस्माभिर्ज्ञायते स सर्वोऽपि युद्धै राप्लुतोऽस्ति
गणनया प्रतीयते यत् गतेषु सार्धत्रिसहस्रवर्षेषु प्रायशः सप्तविंशत्युत्तं
रद्विशतंवर्षाण्येव तादृशा आसन् येषु संसारे क्वचिदपि युद्धं नाभ
वत्। अन्यस्तु कश्चिदपिवर्षो न युद्धं विनाऽतीतः। एवं सति शान्तिवा
दिनां कथनं सहसा कथमभ्युपगन्तुं शक्यते किञ्च ते युद्धरीतिं सर्व
थाभिरोद्धमिच्छन्तः सर्गादौ ब्रह्मणा सृष्टं चातुर्वर्ण्यं विलोपयितुमेव
प्रयतन्ते । यतो हि तेषां क्षत्रियजाते र्विनाश एव सर्वथाऽभिप्रेतः ।

परन्त्वायमस्माकमाशयो यत्सर्वैरपि देशैःकस्मिंश्चिद्विरोधे समु
पस्थिते युद्धै रेव निर्णयः कर्तव्यः, किञ्च सर्वैरपि बलवद्भिर्देशैर्नि
र्बलदेशाः स्वायत्तीकरणीया, विश्रब्धं च तत्रात्याचरणीयम्। प
वयमिदमभिप्रैमो यत् युद्धानां सर्वथानिरोधो नितरामसम्भवः
तेषां संशोधनमवश्यं कर्तव्यम्। यदि हि मनुष्या अपि सर्वदा शा
रीरेणैव बलेन निर्णयं करिष्यन्ति, यदि बलवन्तो देशा निर्बलानधि
कृत्य स्वसुखाय तान्विलुण्ठिष्यन्ति यद्धि खलु मूलं सर्वस्याशान्तेस्त
दा सर्वेऽपिदेशा ज्ञास्यन्तिय च्छक्तिमतामेवसर्वत्राधिकारोऽस्ति तर्हि सर्वे
ऽपि देशाः परस्परं स्पर्धालवः सन्तो नक्तन्दिनमपरिमितां सैन्यशक्तिं
युद्धशक्तिञ्चोपवर्धयितुमनिद्रिताः दत्तचित्ताश्च स्थास्यन्ति । तदा
सर्वाणि धर्ममन्दिराणि, पाठशाला, धर्मशालाः, पुस्तकालयाः शिविरा
ण्येव भविष्यन्ति। सकलान्यपि कलाभवनानि समरोपकरणनिर्मा-
णसम्पृक्तान्येव भविष्यन्ति। सर्वेऽपि समुद्राश्च भयावहपोतावगाहि-
ता भविष्यन्ति। अहो कीदृशोऽसौ भयानकः समयो यस्य चिन्त-
नेनैवोत्कम्पः संजायते. साम्प्रतञ्च संसारस्तदभिमुखमेवो-
पसर्पन्दरीदृश्यते । सर्वैरपि पाश्चात्यदेशैः पूर्वीयदेशैश्च
युद्धोपकरणेषु प्रतिवर्षं महानर्थव्ययः क्रियते। शान्ति समयेऽपि
प्रायशः सर्वै रेव देशैर्वार्षिकधनागमस्यार्धभागो युद्धोपकरणेष्वेव
वितीर्यते ' अस्माकं भारते यत्र सर्वथा शिक्षाऽभाव एवास्तियत्र च

चिरकालाद्युद्धं न जातम् तथापि शिक्षायां न तावान् व्ययः क्रियते या वान्युद्धोपकरणेषु । युद्धसमये तु धनव्ययस्य संख्यामपि दुष्करम् ।प्रभुमण्डलै निर्धनेभ्यो-ये जीवन यात्रा मपि दुःखेन कुर्वन्ति-कररूपेण महद्धनमादीयते येन धनेन ते अपरैः सह योद्धुं शक्नुयुः। भारतदेशस्य कथैव का, रूसदेशे, इटलीदेशे अपरेषु च देशेषु कोटिशो निर्धनाःसन्ति बहव स्तेषु भोजनमन्तरेण प्राणानपि विजहति तेषां रक्षकः कश्चिदपि नास्ति । सर्वैरपि प्रभुमण्डलैः पूर्वं त एव रक्षणीया इदमेव तेषां मुख्यं कर्तव्यम् । परं सर्वेऽपि देशा शिक्षया धनेन सुखेन च प्रजा अपालयित्वैव पूर्वं स्वार्थाभिभूता मदोन्मत्ता इव योद्धु मेवाभिलषन्ति । अत एवास्माभिरभिधीयते यद्दुर्निवाराणां युद्धाना मर्वाचीनारीतिरवश्यं संशोधनीया/ यदि शक्तिरेव जातीनांभाग्यनिर्णेत्री स्यात्तर्हि मनुष्यजातिः पशुजातेः कथमपि न भिद्येत । यथा पशुजातौ बलवतामेवधिकारो भवति, स न्याय्यः स्यादन्याय्यो वा परं 'मनुष्यजातावयमेव भेदो यत्तेषु सर्वोपरि धर्मस्यैवाधिकारोऽस्ति, धर्मः खलु शक्तिमपि शास्तुं शक्नोति। यन्याय्यं स्यात्तदेव मनुष्यजातिः करोति । सबलानां कश्चिदप्यधिकारो नास्ति य त्ते निर्बलान्स्वार्थाय अधिकुर्युः । न स्वार्थाभिभूतैः सद्भि देशैः परस्परं योद्धव्यम् । स्वार्थाभिभूता देशा धर्म मेकतः परिहाय किं किमकृत्य मनुतिष्ठन्तीति हरिवर्षस्य जातय एवात्र निदर्शनानि । नहीमानी धर्म युद्धानि, अस्माभिस्तु धर्मयुद्धमेव प्रशस्यते यथा आदर्शभूतं रामरावणयोर्युद्धमितिहासप्रसिद्धम् । तादृशो धर्मरक्षायै समारब्धःसंग्राम एव श्रेयान्नतु स्वार्थसमुत्थापितः । रामेण मुहुर्मुहुः सन्दिष्टोपि रावणो यदा नावबुध्यत तदा तेन स समाक्रान्तः । परन्नतथापि तेन लंका स्वायत्तीकृता । तत्रत्यानामधिकारं स लेषमात्रतोऽपि न जग्राह । अयमेव धर्मयुद्धानामादर्शः । यत्र धर्ममनुसरन्तो देशा नाऽनधिकार चेष्टामातन्वन्ति तत्रैव सुखं निवसति । परं यत्र स्वार्थेन धर्मो हन्यते तत्र स धर्मः स्वार्थिन एव प्रत्याहन्ति यथा साम्प्रतं युरोपदेशम्। अनेनैव शान्तिवादिनां मतमप्यपास्तम्यतः संसारादधर्मो न कदाचिदपगमिष्यत्यतो धर्माधर्मयोर्न्यायान्यायवतोर्वा परस्परं युद्धम्न विर-

# मित्र-सम्प्राप्तिः

गतानि नाशं कुकृतानि मे ध्रुवम्
पुरातनानामुदयः सुकर्मणाम् ।
यदद्य कान्ताद्विधिना वियोजितः
स्वयं समप्रापि सखा सुयोजितः ॥ १ ॥

ध्रुवं न मे जागृतिरद्य वस्तुतो
मनो न नूनं मम पश्यति स्फुटम् ।
कथं वृथेदं चिरलुप्तमन्यथा
मुखं चिराकांक्षितमत्र वीक्ष्यते ॥ २ ॥

यदेव मे चिन्तयतः समाः गताः
बभूव यत् स्वप्नपदेषु मे स्थितम् ।
कथं तदेतच्चिरसुप्तमन्यथा
मुखं मदक्ष्णोरतिथी भवत्यदः ॥ ३ ॥

स्मृतानि यान्येव सखे ! सखण्डनम्
पुरा दिशन्ति स्म ममान्तरामयम् ।
स्मितानि तान्यद्य मनो विकस्वरं
ध्रुवं विधास्यन्ति किमुन्मते मम ॥ ४॥

दृशोर्न मे भ्रान्तिपदत्वमीयते
द्वितीयतां चित्तदशा न मे गता
तथापि यत्त्वं पुरतः सखे ! स्थितो
न तत्र सन्निश्चयमेति मे मनः ॥ ५ ॥

यदा मयि त्वं स्मयपूर्वमीक्षसे
क्षिपस्यथ प्रेमपवित्रितां दृशम् ।
अनिश्चयन्दुःखभयात् पुनर्भजन्
मनस्तु तत्स्वप्नविभासि मन्यते ॥ ६ ॥

प्रयातु यद्वा परिदेवना क्षयं
भवेदतथ्यं तव साधु वीक्षणम् ।
भवन्तमेव त्वभिपत्य सत्वरं
यदस्ति वाच्यं सकलं मयोच्यते ॥ ७ ॥

प्रिये नितान्तप्रणये सहायके
मयि त्वदीयो यदभून्मनो ज्वरः ।
विचिन्तयन्नप्यविचिन्तयन्निव
प्रभुर्न तत्कारणचिन्तने ऽस्म्यहम् ॥ ८ ॥

त्वदर्थमात्माक्षपणार्थमुद्यते
सदैवभोस्त्वय्यनुरुद्धचिन्तने ।
यदेवमासीत्तव चित्तमुत्कटं
न तस्य निस्तारणमस्ति पाप्मनः ॥ ९ ॥

तथापि यच्चेतसि तेऽभवद्दया
चिरावरुद्ध प्रणयस्थिरे जने ।
तदेव ते सच्चरितापराधतो
विमोक्षणाय क्षमतां भजिष्यति ॥ १० ॥

विहाय कालाज्जनितं हृदि क्लमं
विधाय चेतोविहितस्मृतिक्षयम् ।
तथापि शुद्धे मम चेतसि स्थिरम्
चिरादपि स्वागतमस्ति ते सखे ! ॥ ११ ॥

सहायकं सौहृदभावनाश्रयम्
पुनर्भवन्तं परिगत्य कर्मभिः ।
निवेद्य सर्वं क्लमजातमान्तरं
मनो मदीयं लघुतां भजिष्यति ॥ १२ ॥

परस्परक्षेम विचिन्तनोत्सुके
मिथो दृढप्रेमज सूत्र सूत्रिते ।
ध्रुवं सहर्षं मनसा भजिष्यतो
निवृत्तिभावं तपसाऽऽप्यमावयोः॥ १३ ॥

---

# विज्ञानस्योद्भवस्थानम् ॥

सन्ति जगत्यस्मिन् नानाविधा विचाराः । परं ते सर्वेऽपि विचारत्रयेषु समाविष्टाः दृश्यन्ते तच्चविचारत्रैविध्यमित्थम्-प्रथमस्तावत्, वैज्ञानिकः( Scientific ) द्वितीयस्तावत्, दार्शनिकः(Philosophical) तृतीयस्तावत् धार्मिकः ( Religious ) कथमेषाँ त्रयणामुत्पत्तिः, कथञ्चैषां प्रचार इति नायं विचारणीयो विषयः परं कुत्रैषां प्रथमोद्भवस्थानमिति विचारणीयमस्ति—

सर्वेऽप्यधुना पाश्चात्यैतिहासिका, स्वीयैतिहासिकग्रन्थेषु निजगर्वमदवासनावासितान्तःकरणा विचारत्रयविषये स्वीयगौरवं प्रदर्शयन्ति निर्वर्णयन्ति चैतादृशाणां विचाराणामुद्भावकान् यूनान पारसखालडियाप्रभृतिदेशवासिनः । तत्र भारतवराकस्यनामाऽपि न श्रूयते क्व गतं तस्यात्मगौरवं क्वगता मनोः प्रतिज्ञा

,, एतद्देश प्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः,, ॥

क्वेयमुक्तिः भारतीयानाम्, क्वास्ताः क्व च निपतिता एतत् सर्वमपि विचार्य हृदयं विदीर्यते, तथ्यमिदं सर्वं किमु पश्चात्तापेन यतनीयमधुनापि कृतयुगः स्वयमेवोत्पत्स्यते ।

नासीत् प्राचीन काले कोऽपि तावत् सभ्यःप्रदेशोयावदासीद् भारतवर्षं सर्वेऽपि पाश्चात्य प्रदेशा आसन् वल्कलवेषधारिणो मांसभोजिनश्च तेषां साम्प्रतिकयाः सभ्यतालतायाः बीजमित एव भारतात्तैरधिगतं यस्येदं युद्धपाटवं व्यपारकौशलादिकं फलं नित्यमुपचीयते । प्रतिज्ञायते आङ्ग्लैर्यदस्योद्भावक आसीन्नवतनु(न्यूटन)महोदय इति अहो एषां गौरवमदता यदभिज्ञा अपि सन्तो यदेषां विचारणमस्ति श्रृङ्खला ये न्यूटन महोदयेन गुरुत्वविषये, यान्त्रिकविषये च प्रदर्शिता, न किञ्चपि परकीयं श्रोतुमुत्सहन्ते गैलिलीयोमहोदयेन, कैपलर

महोदयेन च ये नियमाः प्रकाशितास्ते सर्वे ऽपि न्यूटन महोदयेन साधिताः अस्त्येतदेव वास्तविकं रूपं न पुनस्तेनैवोद्भाविताः । अथ च ते ऽप्युपर्युक्ताभ्यां द्वाभ्यां प्रदर्शिता नियमास्ततो ऽपि पूर्वं केनचित् कोपर्निकसनाम्ना पारसीकेनासन्नेकस्मिन् ग्रन्थे समुपवर्णिताः । तेन ग्रन्थेन ज्ञायते यत्तेषां मूलमासीद्भारतादेव गतमिति । अतो ज्ञायते यद्भारतमेवैषां विचाराणामुद्भवस्थानम् । अन्यच्च प्रतिज्ञायते सर्वैरपि पाश्चात्यैः प्रकाशवाहक इथरनामकः पदार्थः सर्वतः पूर्वं फास देशस्थानां जर्मनदेशस्थानाञ्च, गणितज्ञानां रसायनविदाञ्च कल्पनेति परमुपलभ्यते चीनदेशस्थग्रन्थेषु, ये खीष्टाब्दतश्चन्द्रेन्दुवर्षपूर्वमासन् लिखिताः । सर्वविकासवादसिद्धान्तस्य मूलमप्युपलभ्यते चीन देशस्थैर्दार्शनिकैः च्यू, चैङ्ग, चिङ्ग, चो प्रभृतिभिः स्थापितम् । एतत्सर्वमपि भारतादेव गतमिति प्रतीयते, यतो हि तस्मिन् समये आसीत् चीनदेशस्य भारतेनसह सम्बन्धः । ततो ऽपि पूर्वं अस्माकिनेषु ज्योतिषग्रन्थेषु, ब्राह्मणग्रन्थेषु, दर्शनग्रन्थेषु, च एतादृशाणां सिद्धान्तानामूलमुपलभ्यते । प्रकाश विषये यादृशः सिद्धान्तो न्यूटनमहोदयेन संस्थापितस्तादृश एव सिद्धान्तो वैशेषिकदर्शने उपलभ्यते भेदेस्त्वेष एव यत् कणादप्रभृतयो द्रव्यं स्वीचक्रुः । परंत्यूटनमहोदयेन द्रव्य मिति नाङ्गी कृतम् परमधुना सः खण्डीत प्रायएव संवृत्तः यदा यङ्ग महोदयेन प्रदर्शितो राद्धान्तस्तरङ्गमार्गस्य । अतः प्रतीयते यत् सर्वे ऽप्येतादृशा विचारा प्राकृतना एव । अर्थादेषां विचारणामुद्भावका भारतीया विस्तारका पाश्चात्या इति

---

# वैदिकी धर्मगङ्गा

एतद्देश प्रसूतस्य सकाशादग्र जन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥
मनुः

सुविदितमेतत्, जगति दृश्यमाना विद्या धर्मा-
श्च आर्यावर्तादेव प्रसारंलेभिरे ।
'दयानन्दः'

आसीत्कदाचिद् भारतं सर्वविषयाग्रणि धर्मधुरीणं धनधान्य-यशो वुद्धि समन्वितम् । तदाहि दिग् दिगन्तरेभ्यो भारतं विद्यापीठ मिति ज्ञात्वा विद्याधर्मोपलब्धये समाययुः विद्यालिप्सवो धर्मपिपासवश्च भारते । परमधुना दुर्विधविलसितेनावसादमापन्नमशेषं पूर्वोपार्जितं विद्याधर्मबुद्धियश इति साम्प्रतिकीं हीनां भारतीयां दशा मव-लोक मवलोकं न कोऽपि विश्वसिति भारतस्य पूर्व-महिम्नि ।

केचिच्च आधुनिकसभ्यता चाकचक्यचकित चक्षुव इवोल्यूशन थ्योरी विदः 'दूरस्थाः पर्वताः रम्याः' इति लौकिकंन्यायमजानन्तः फल्गुषु प्राकृतिकवस्तुष्वास्थां बध्नन्तः पाश्चात्यास्तदन्तेवासिनो भारतीया श्चाज्ञानवशाद् भारतीयां सभ्यतामुपहसन्तःप्राचीनानार्यान् तदनुगन्तृँश्चश्रद्धाजडाना चक्षते ।

अद्यत्वे कैश्चिद् विद्वद्भि र्महान्तमायासमङ्गीकृत्य सर्वेषां जनपदानां यथासम्भव मुपलभमानं प्रत्न मितिहासं धर्मश्चावगाह्यनिरचायि यद् वेदसरसो निःसृत्य भारते वर्षे विस्तारं लभन्ती धर्मगङ्गा देशदेशान्तरेषु प्रवहन्ती तत्रस्थमानवहृद्भुव मासिषेच । तेषां विद्व

षामेव ग्रन्थानुपजीव्य तुलनात्मकधर्माभ्यसन रीत्या (Comparative Study of religion )समासेनामुमर्थं प्रतिपिपादयिषामः।

प्रारम्भिकं वचनम्— सर्वमतमतान्तराश्रयभूतस्य धर्ममूलस्य, आत्मपरमात्मनोरन्यतर एव चेतन त्वात्प्रसवभूमितां लभते, नान्य इति। तत्र यैरपि परमात्मा धर्मस्य प्रसवभूमित्वेनाभ्युपेयते, तैरपि न पुरुषबुद्ध्यादिकृता तद् तद् देशकालरचनाविशेषादिकृता वा धर्मस्य महती संस्कृति र्विकृति र्वा ऽपलप्यते। ते तु केवल मित्थमाचक्षते यद् धर्मगङ्गायाः परमात्मैव प्रसवभूमिः,परमात्मन एवादौ धर्मजलमासाद्य प्रवृत्ता धर्मवाहिनी, तदूर्ध्वञ्च मनस्विभि महात्मभिः ( स्वज्ञानपरिस्थित्यादिकमनुरुध्य )विविधं संस्क्रियमाणा परश्शतासु कुल्यादिष्विव परिणता चित्रंविचित्रं रूपं बिभ्रती दृष्टिपथमवतरति नो ऽद्यत्वे ।

वीविधदेशधर्मेतिहास परिशीलनेन विज्ञायते यन्न धर्मविषये को ऽपि किमपि कदापि नूतनमाविश्चकार।

धर्मस्य मूलसिद्धान्ताः—येषुधर्म प्रतिष्ठितं वतते—अति प्राचीनाः सन्तो मानवसर्गसमकालिकतां भजन्ते। अर्वाचीनो धर्मः स्वोद्भवं भूतकाले, सरुद्भवश्च प्राचीने, सोऽपि प्राचीनतरे, सोऽपि प्राचीनतमे स्वप्रसवभूमिं व्यपदिशतीति विचार परम्परयाऽवधार्यते यत् सर्गारम्भे एव परमात्मना ज्ञानाङ्कुरा उत्पादिताः। तैश्चावश्य माम्नायचतुष्टये निहितै र्भाव्यम, योहि जगति प्रचीनतम पुस्तकत्वेनाभ्युपगम्यते सर्ववादिप्रतिवादिभिः।

सर्वोऽप्यास्तिकजनः परमात्मानं सर्वज्ञानभाण्डागारिकं, विशेषतश्च धर्मज्ञानभाण्डागारिकं मन्वानो न विप्रतिपद्यते। पाश्चात्य दार्शनिकाग्रणीना मन्यतमस्यडेकार्टाभिधस्य( Descartes) महात्मनोऽस्ति परमात्मविषयक इत्थं हृदयोद् गारः—

"ध्यायं ध्याय ममुमर्थ महं दृढं श्रद्दधे यन्न कथमपि मया ( मादृशेन वा ऽल्पज्ञेननरेण ) परमात्मविषयको विचार उद्भावयि-

तु' शक्यते यतो नहि परिछिन्न' ( Finite ) लिप्तं प्रकृत्यासक्तं मम मनो विभु' ( Infinite ) निर्लेपमनासक्त्यादि धर्मवन्तं परमात्मानं चिन्तयितु' क्षमम् इति स्फुटं न मया परमात्मविषयको विचारः प्रकल्पितः, परमात्मनैव मम हृत्पटले ऽङ्कित एष विचारः" ।

अद्यत्वे ऽस्माभि न्यायकारिनिरुपमसर्वशक्तिमत्सर्वज्ञा नन्त पूर्णाप्रतिहतशक्त्यादि गुणवान् परमात्मा ऽभ्युपगम्यते । परं नैते परमात्मनो गुणा अविदिता आसन् जगति। अतिपुराणे वयसि वैदिका ऋषयो मनसो ऽगोचरं विचारातीतं ब्रह्म न्यायकारिनिरुपमादि गुणान् व्यपदिश्य अस्तुवन् ।

ये ये परमात्मनो गुणाः पुराणै ऋषिभि रस्तूयन्त न तदतिरिच्य को ऽपि परमात्मनो नवीनो गुणोव्यपदेष्टु'शक्यते साम्प्रतिकैर्दर्शनिकै रास्तिकैर्वा।अन्येषु विषयेषु प्रकामं वयं बहुज्ञा विशेषज्ञाश्च स्याम, प्रकामं वा प्राकृतिकविज्ञानेऽहरहो महतीं मुन्नतींकुर्याम परं न परमात्मविषकं ज्ञानं पूर्वां मर्यादामणुवपि अतिशेते ।

निष्प्रत्यूहं वयमाचक्षमहे यत्प्रकामं युगानि व्यतीयुः, प्रकामंवा नूतनातिनूतनं प्राकृतिकं वस्तु गुणादिकं वा ज्ञातं भवेत्परं न जात्वपि कस्मिंश्चिद्वयसि नूतनं परमात्मतत्व' ज्ञास्यामः ।

अमुमेव विषयं प्रतिपादयन्ती थ्योसिफिकलसभायाः संस्थापिका ब्लावस्किी नाम्नी काचन महिला इत्थ मालिखति ।

" नहि धार्मिके जगति किमपि नूतन माविर्भ वि ष्यतीतिविदुषां मतम् नह्यार्थ जातीयैर्नापि सैमेटिकट्यूरनप्रभृतिजातीयै र्धर्म विषये किमपि नूतन माविष्कृतम् । ते तु केवलं पुरातनमेवधर्मं मुकुराइव प्रत्यस्नावयन्........................... " इतिब्लावस्किया वाक्यानि प्रमाणत्वेनो पन्यस्यन् प्रख्यातो मोक्षमूलरो भट्टस्तदेव पुष्णाति स्व सहमति प्रदर्शनेन । तद् सिद्ध' धर्मस्य मूलमापातत : परे ब्रह्मणि वर्तत इति ।

अत्रेयं संशीति जागर्ति-किं सर्वे धर्मा ईश्वरीय ज्ञाने समां तुला मधि रोहन्ति, किं वा मिथो विप्रतिपद्यमाना अपि धर्मा यथार्था इति अत्रैवं प्रतिविधीयते यदेते धर्माः सत्यानृता, ईश्वरीयसद्धर्मेण सह मानव बुद्धि कल्पित मनृतं मिश्रीभाव मापन्नं तेनैते उत्पन्नाः। निपुणं निरीक्षता जनेन शक्यते सर्वत्रापि धर्मेषु किमप्य विरुद्ध मुपलब्धुम्। तदेव सद्धर्मेति व्यपदेष्टव्यम्। अत्राह प्रातः स्मरणीयः सर्वतो रमणीयो भगवान् दयानन्दः "यस्मिन् वस्तुनि एते परश्शताः मतवादिन एकमतिका भवन्ति तत्सत्यं वैदिक मित्युपादेयं यस्मिंश्चविप्रतिपद्यन्ते तदनृत मिति हेयम्"।

मिथो विरुद्ध मपि धर्माणां तत्वं तदर्थप्रतिपादक श्रुते रन्यथा योजनेनोद्भूत मिति तस्याप्याश्रयो वेद एव।

तदेतावतीं भूमिका माबद्धया धुना एकशो जगतः प्रख्यातधर्मान् आलोच्य दर्शयिष्यते यत् सर्वे धर्मा वैदिक धर्मगङ्गाया स्तोयमादाय कुल्यारूपेण प्रवृत्ता जगतः संतप्तान् भूभागान् स्व शीकरासारशीतै रमृतवचोभि रभ्यषिञ्चन्।

'देवः'

———

# प्रतापसिंहस्यान्तिमः कालः

## ( देशभक्तेश्वरसमुदाहरणम् )

कंचिदेव भारतीयेष्वधन्यं जानामि यः खलु वीरशिरोमणेः प्रतापसिंहस्याभिधानेनाऽनभिज्ञ आस्ते । अयं खलु महात्मा क्षत्रियकुलदिवाकरोऽद्यापि न कस्य चेतःसरोजमानन्दमावहति । को न जानाति यदयमेक एव वीर स्वकृत्यं प्रतिपालयन् नित्यं मूर्त्त इव क्षात्रधर्मः स्वदेशोद्धारार्थमार्य्यजातेश्च रक्षार्थं महान्तं यत्नमातिष्ठते स्म । केन खलु राजकुलोत्पन्नेन एनमन्तरा तृणमिव लक्ष्मीं परित्यज्य सदा दीनामेवावस्थामधिश्रित्य पञ्चविंशतिवर्षपर्य्यन्तं गहनासु गिरिगुहासु दुर्गमेषु काननेषु विजनेषु सिकतास्थलेषु च निःस्वार्थतया परोपकृतिपरेणैव आर्य्यधर्मप्रतिपालनार्थं कालोऽतिवाहितः । तस्यैव प्रातःस्मरणीयस्य महात्मनः सुगृहितनामधेयस्य किंचिदिव राजस्थानेतिहासतः समुद्धृत्याऽन्तिमचरितं पाठकानां चक्षुषां गोचरं करोमि ।—

अस्ति ग्रीष्मर्त्तोः सायं समयः । तिग्मरश्मिर्निजकुलस्यैवावहेलनामवलोक्य कुपित इव लज्जित इव किञ्चदरुणिमानं दधानोऽस्तोतोऽस्तं यातुम् । तस्यारुणाः किरणा दूरवर्त्तिषु चित्तौडसौधशृङ्गेषु पतन्तः कांचिदपूर्वां वचसामगोचरामासन् छटां चक्षुषोऽर्पयन्तः गगनचुम्बिनो दुर्गस्तम्भाः, सुधाधौताः प्रासादाः, अतिमनोहराश्चोपवनभूमयः किञ्चिदतिरमणीयमेव चित्रमादर्शयन्ति स्म । अस्मिन्नेवाऽवसरे महाराजः प्रतापसिंहः कुत्रचिदुन्नते गिरिशिखरे स्थितश्चित्रितइव निमीलितनयनो न जाने कस्मिन्नासीत् विचारमहोदधौ निमग्नो येन न बाह्यमासीज्जगदानन्दयत्तस्य चेतः ।

अत्रान्तर एव सहसा ऽूर इव समुत्थिता विचारतरङ्गाः सर्वत्र तन्मनोभूम्यां प्रसृताः कांचिदपूर्वान् भावान् तस्य पुरतः समानयन् स खलु चित्रपटोल्लिखितमिव चित्तौडभूमेरितिहासमभि-

मुखमिव नयनानां करोतिस्म । तेन स्पष्टमिवावलोकितं बाप्पा-रावलेन मार्य्यवशीयं पराजित्य राजानं हृतं राज्यासनमाहितं च राजमुकुटम् । ततश्च दृषद्वत्या उपान्तास्थलेषु वीरकेसरिणःसमर-सिंहस्य युद्धकौशलं साहसचरितञ्च तस्य सम्मुखं नृत्यदिवाऽऽ-स्तेस्म । एवमेव क्रमेण निजैर्द्वादशपुत्रैः सह संगतस्य भीमसिं-हस्यापि चरितं शनैस्तस्य दृष्टिमपाक्रमत । अथैवं कालेन समस्तमपि चित्तौडनगरं तेन घोरैस्तमोभिराक्रान्तमिवालोकितम् । ततः स्व-पितुरुदयसिंहस्य ततो पलायनमपि साश्रुभिर्नयनैरयं कथंकथ-मपि निरवर्णयत् । अस्मिन्नेव विचारे सहसैव तस्य चित्तं शतधेव व्यदीर्य्यत । अथच स तूर्णमेव यावत् संज्ञामलभत तावदेव तस्याय-चेतस्तरुस्ततोऽपिघोरतरैर्विचारवातैराहतः समभूत् ।

सोऽयं व्यचिन्तयत यत्हन्त "सर्वजगतां प्रकाशकस्य सूर्य्यस्य वीर प्रस-वेऽपि कुले संजातोऽहमिदानीं यवनहतकसदृशैररिभिरप्यनुकम्प्योऽ-स्मि संवृत्तःतैर्दयनीयोऽयमितिकृत्वाऽस्ति समरेण विरमितमिति मादृ-शामस्ति महल्लज्जास्थानम् । ते खल्वस्मत्पूर्वजाः सपत्नैर्विहितमुपहासं वा घृणां वा तृणाय मत्वाथेतादृशीं तैः कृता दयां नस्मसहन्ते । हाह-न्त ! सापि मयेदानीं हतभाग्येन क्षन्तव्या स्यात्" ।

इयमेव चिन्ता सदा पिशाचीव तं व्यथयन्ती तत्र कुटीरे रो-गिणमेव कृत्वा शान्ता । ततः शनैः २ वर्धमानो ऽयं

तस्य रोगस्तं यमपुर्य्याः द्वारमानीय समस्थापयत् । तदा गभीर मुच्छ्वस्यायं यावदेव कलुषितां मातरं कैश्चिदश्रुभिः क्षालयितु-मियेष तावदेव सामन्तशिरोमणिना शालुम्ब्राधिपतिना चन्दातव-तेनाकाङ्क्षितं यत् " किन्तु नामेदमतिदारुणं दुःखमत्रभवतां पवित्र-मात्मानं पीडयति येनायं महान् संरम्भो जनितः " अथ क्षणं विरम्य शनैः राजा समुदीरयत् "सामन्तवर्य्य ? नेदानीमपि प्राणाः कलुषितमिमं कलेवरमपजहति यतः किमपि तैर्भवद्भिरभिवा-ञ्छ्यते । प्रतिज्ञायतां वीराः यत् यावज्जीवं मातृभूमेस्तिलमात्र-

मपि स्थानं न भवन्तस्तुरुकानर्पयिष्यन्ति । प्रतिज्ञामिमामाकर्ण्यैव नयने ऽहं निमीलयिष्यामि । पुत्रो ऽमरसिंहो जनन्या स्वाधीनतां स्थापयितुं न चिरं क्षमिष्यते । स खल्वस्ति निविडै र्भोगजालैः प्रतिबद्धः सोऽत्र पर्णकुटीभिः पवित्रिते स्थले नियतमुन्नतानि हर्म्याण्युद्धारयिष्यति हन्त ! तस्मिन् विलासिनि संजाते मातृःभूमेस्तद् गौरवं नियतं विनङ्क्ष्यति यदर्थं मयैता विपत्तयः सोढाः ; धवलमस्या यशः कलुषितं किल भविष्यति । अतः प्रतिज्ञायतां वीराः यदेनमापदि भवन्तो भारतस्य गौरवमास्थापयितुं समीचीने पथि संचारयिष्यन्तीत्यहमिदानीमेव शान्तः प्राणान् हास्यामि" । ततः सर्वेऽप्येकेनैव स्वरेणोचुर्यत् "राजन् ? विश्वसिहि यदस्मासु कस्मिन्नपि जीवति न कश्चन साहसी तुर्को मेवाड भूमिं पादैराक्रमिष्यति न च युवराजो भवदाज्ञा पराङ्मुखो भविष्यति नाप्येताः कुट्यः परित्यक्ष्यन्ते,, इमामाकर्ण्य तेषां घोरां प्रतिज्ञां चित्तौडगिरिकन्दरनिवासी, यवनकरिमदावहेलनः श्रीमान् प्रतापसिंहो नैजं सुरुचिरं प्रतापदीपमतीव शान्ततया निरवापयत् ।

—०—

# लोकसमीक्षा

यन्त्रालय धारायाः ( Presact ) प्रकोपः प्रत्यहमुपचीयमान एव दृश्यते। नियमनिर्मातृभि यत्स्वप्नेऽप्यचिन्तितं तदेव स्फुटमभि नीयमानमालोक्यते। नियमनिर्मातृभिः पूर्वमिदमेवोक्तं यदस्य नियमस्य न तावान्प्रयोगो भविष्यति केवलं सम्पादका यथा नियमनियन्त्रिता स्युस्तथैवायं नियमो निर्मीयते। परमनेन करालेन नियमेन कति पत्राणि कवलितानीति कस्यनावगतम्।

अस्माभिरिदमेवो च्यते यत यद्यस्य नियमस्य प्रयोगो ऽधिकारिभिरवहितैः सद्भिः क्रियेत तदा नूनं सर्वमुद्दश्यं सेत्स्यति

यदि प्रभुमण्डलेन सन्दिग्धानि पत्राणि प्रथममेव सावधानानि क्रियेरन् तदा न तादृशं दुःखवृत्तं संघटितुमर्हति। किञ्च कानिचित्पत्राणि इदमेव न जानन्ति यत्तेषां को लेखो शब्दो वा संदिग्धो वर्तते। यदि प्रभुमण्डलेन ते लेखा शब्दा वा प्रत्यक्षं निर्दिश्येरन्तदा न कश्चिच्छन्दमेकमपि प्रतिवक्तुं शक्नोति। वयमित्थं पश्यामो यदुच्चाधिकारिणः केवलमधिकृतानां राजपुरुषाणां सूचनामेव बहुधा विश्वसन्ति न स्वयं सर्वं परीक्षन्ते। यदि ते स्वयं परीक्षेरन् तदा बहूनि पत्राणि निर्दोषानि सिद्धयन्तु। यथा इदानीमेव पांचकौडीमुकुर्जी महोदयस्य 'नायक' नामकं पत्रम् राजपुरुषेषु विश्वस्य प्रभु मण्डलेन राजापथ्यदोषेन दूषितम् तस्य प्रकाशनमुपरुद्धञ्च। परं यदा प्रार्थितेन कलिकाताप्रेजिडेन्सी न्यायाधीशेन तत्पत्रं स्वयमालोकितम् तदा तेन स्पष्टमेवोद्घोषितम् यत्सर्वथैव पत्रमदूषितं वर्तते। इत्थमेव 'कर्मयोगिन नामकं पत्रमपि न्यायाधीशेन निर्दोषमेव साधितम्। न्यायमूर्तै युक्तप्रान्ताधीशस्य सर्वेऽपि वयं कृतज्ञाः स्मो येन अभ्युदयपत्रस्याशंकितानि वाक्यानि निर्दिष्टानि पुनश्च सहजेन न्यायेन तत्पत्रम् यन्त्रालय धाराया भीषणात्पञ्जरान्निर्मोचितम् इतो हमदर्दादि पत्रसम्पादका इदमेव न जानन्ति तत्केषां केषां लेखानामुपरुद्धमिति

—o—

शिक्षया राज्यायत्तया भवितव्यं प्रजायत्ता वेतिनात्रकिमपि वक्तुमिच्छामः। परमिदमेव स्थापयामो यत्प्राचीनभारते शिक्षा न जातुचिदपि राज्यायत्ताऽभूत् । ब्राह्मणानामिदं कर्तव्यमासीद्यत्ते शिक्षां प्रचारयेयुः। राजानः खलु सादरं शिक्षणालयेषु निरोक्षितुमगमन् धनादिना च सहाय्यमकुर्वन्। इतिहासे सर्वत्रापि श्रूयते यत् राजानो ब्राह्मणेभ्यः परः सहस्राः गावः प्रायच्छन् महद्धनञ्च प्राददन्। न तद्धनम् ब्राह्मणैः स्वयमुपभुज्यते स्म परमध्येतॄणां विद्यार्थिनामुपकाराय प्रकल्पतेस्म । मध्यकालेऽपि तक्षशिलायां नालन्दे अन्यस्थानेषु च बहवो विश्वविद्यालया आसन् परन्नकश्चिदपि तेषां राज्यायत्तः श्रूयते। सर्वत्रापि ब्रह्मणानान्निजाधिकार आसीत्। यतो हि शिक्षणालयानाम्प्रजाधीनत्वमेव लाभकरम्। शिक्षणालयानां नियमाः स्थानभेदाज्जातिभेदात्समयभेदाच्च शीघ्रमेव परिवर्तन्ते । राजनियमा न तथा परिवर्तन्ते न च परिवर्तयितुं शक्यन्ते। यतो राज्याधीनानां शिक्षणालयानां नियमा न शीघ्रं परिवर्तन्ते अतस्तत्रत्या शिक्षा न पूर्णतो लाभकरी भवितुमर्हति ।

विशेषतो भारते यथा पञ्चाशद्वर्ष पूर्वमासीच्छिक्षा तथैवाऽद्यापि वर्तते। यदा चान्यदेशेषु प्रत्यहं संशोधनानि जायन्ते।प्रजा संशोधनमिच्छन्त्यपि न संशोधनं कारयितुं पारयति । राजप्रजयोः स्वार्थभेदोऽपि बहुधा संशोधनेऽन्तरायभूतो भवति । अतो बहुधा शिक्षणालयानां हितकराः प्रस्तावा एव अस्वीकृताः संजायन्ते ।

द्वितीयं तावद्भारते राज्याधीनेषु शिक्षणालयेषु न तादृशी आचारव्यवहारशिक्षा दीयते यादृशी अस्मत्सभ्यता प्रचारयितुमिच्छति । इयमाधुनिकी शिक्षा प्राचीनसभ्यताया मूल एव कुठार घातं करोति । अतो भारतीयानां महानुभावनामिदमेव कर्तव्यम् यत्तादृशीं शिक्षां प्रचारयितुं स्वतन्त्रान् शिक्षणालयान् स्थापयेयुः ।

—o—

इमं च गरीयांसं भारमुद्वोढुं मनस्विनो धीरामनुष्या एवा ऽपेक्षन्ते। नहि साधारणैरधीरैरिदं कर्तुं सुशकम् । क्षणमत्र जापान-देशस्य वसीडा विश्वविद्यालये दृष्टिः क्षिप्यताम् त्रिंशद्वर्षेभ्यः प्राक् जापानदेशे नासीत्कश्चिदपि स्वतन्त्रो विश्व विद्यालयः। राजकीय-शिक्षणालयानां च शिक्षा प्रजया संशोधयितुमिष्यतेस्म । अतः, कौन्ट औक्युमा नामको महानुभावो महाप्राज्ञः यः खलु पूर्वं राज-सभायां परराष्ट्रसचिवपदमप्यलमकरोत्तदेव दुष्करं कार्य्यं कर्तु-मुद्यते । सखलु बुद्धेः स्वाधीनतोत्पादिकां शिक्षामेव दातुमि-च्छतिस्म । पूर्वं तस्यायम्प्रयत्नः सर्वथाप्युपहास्यतामुपगतः । यतोहि राजकीय सहायतां विना न कश्चिदपि कांचन संस्थां चा-लयितुम्पारयतीत्येव मन्यतेस्म जापान देशीयैः। तेनच्च महानुभावेन सर्वमपि बाधासंबाधमवधूय कार्य्यमारब्धमेव। अथ तस्यशिक्षणा-लयस्यत्रिंशत्तमं वर्षमस्ति। तत्र १८० उपाध्याया अध्यापयन्ति सप्त-सहस्रं च विद्यार्थिनामधीते । तत एव निर्गताः परः सहस्राश्च वि-द्यार्थिनो राजसभासु शिल्पकार्ये व्यापारे पत्रसम्पादनकलाया-मन्यासु च कलासु लब्धप्रतिष्ठा वर्तन्ते। इत्थं कोन्ट औक्युमासदृशा एव महानुभावाश्चेदिहापि समुत्पद्येरन् तदा न तादृशं कार्य्यं दुष्करं भविष्यति।

—o—

एतदर्थमेवासीत् श्रीमतो माननीयमदनमोहनमालवीयस्य सर्वो-पि समारम्भः। परं तस्य विश्वविद्यालयस्य भाग्यनिर्णयस्तेषामेव दुर्दमकरतलमुपगतो ये तादृशीमेव शिक्षाम्प्रचारयितुमिच्छन्ति या सर्वथापि भारतीयां पवित्रसभ्यतां समूलमुन्मूलयति या च स्वप्नेपि नास्मभ्यं रोचते । अस्माकमिदानीमाशापल्लवेषु सर्वथापि हिमशी करपात एव संजातः। नात्र तस्य विश्वविद्यालयस्य संचालका दोष-भाजः सन्ति तत्रास्माकमार्य्यजातिरेवापराध्यति । न हि तस्यां तादृशः समुत्साहः समालोक्यते यं विश्वस्य ते तादृशं महान्तं भारमुद्वोढुं

प्रक्रमेयुः। यदार्य्यजातिस्तान्विश्वासयेत् यत्सा विदुष आत्मत्यागिन उपाध्यायान्, प्रबन्धकर्तॄन्, तादृशविस्तृतं कार्य्यं प्रचारयितुं च पुष्कलामर्थराशिं प्रदास्यति तदानूनं तस्य संचालका प्रभुमण्डल मुपेक्ष्यैव कार्यंकरिष्यन्ति। अतो न वयं संचालकान्स्तत्र दूषयामः, पर मात्मनो मुखमेव लज्जयोपगूह्यनिभृतं रोरुदीमो यदहो इयमस्माकमार्य जातिःकियदधो निपतिता या कदाचित्सर्वमपि भुवनमण्डलं करबदर-वदशासीत् सैवाद्य एकं विश्वविद्यालयमपि शास्तुं नशक्नोति सर्वोऽपि संसारः कथमस्मान्निन्दिष्यतीत्यपि न वयमनुभवितुं शक्नुमः। कदास्माकमार्यजातिः कोन्ट श्रौक्युमासदृशान् महानुभावा-नुत्पादयिष्यतीत्येवास्माकमुत्सुकैरिव हृदयै भविष्यत्कालः पृच्छ्यते।

—o—

बडोदाराज्यस्य वार्षिकवृत्तान्तोऽस्माकमिदानीमेव दृग्गोचरतामुपगतः। तेन प्रतीयते यत् बडोदादेशे प्रतिशतं ६५ मनुष्याः कृषिकाराः सन्ति, द्वादश मनुष्याश्च शिल्पकार्येषु प्रसक्ताः सन्ति। इत्थमेव शिल्पकार्येषु मनुष्या प्रति वर्षं वर्धिष्यन्त इत्याशास्यते। अन्यत्सर्वमभ्युपेदय वयमिह केवलं संशोधनद्वयमेव प्रर्शयितु-मीप्सामः। गतवर्षे तत्रत्येन प्रभुमण्डलेन एको विवाह नियमः स्वीकृतः यत् द्वादश वर्षतो न्यूनायुष्काया कन्याया षोडषवर्षाच्च न्यूनस्य पुरुषस्य विवाहो न भवितु मर्हति। इत्थं तत्रत्यो महाराजः समाज संशोधनमपि कुर्वन्सर्वेषां समाजसंशोधकानां धन्यवाद-भाजनमस्ति। द्वितीयं तत्र राज्ये पूर्वं न्यायप्रबन्धयोरेक एव विभाग आसीत्पर मिदानीं महाराजेन न्यायप्रबन्धभागौविभिन्नौ २ कृतौ। प्रजया च प्रत्यक्षमवेदानीमनेनप्रबन्धेन सुखमनुभूयते। अत्र भारतीय प्रभुमण्डलेनाप्यनुभवो ग्रहीतव्यः। इत्थमेवान्यै र्देशीयनृपति-भिरपि चेत्संशोधनानि क्रियेरन् तदा देशीयराज्यनां शीघ्रमेव महत्युन्नतिः सम्भवति।

—०—

यथा यथा सभ्यदेशेषु विद्या देव्याः समुल्लासः संजायते तथा २ आर्य सिद्धान्तानां विजयनादोऽपि सानन्दमस्माभिराकर्ण्यते। अन्यान्सिद्धान्तान्परिहाय वयमत्रकेवलमेकस्यैवसिद्धान्तस्य विजयनादं श्रावयितुमिच्छामः। आर्याः खलु मृतानां शरीराणि भस्मसात्कुर्वन्ति तत्र भगवान्वेदोपि "भस्मान्त थं शरीरम्" इत्यनया श्रुत्या तदेवाज्ञापयति। क्रिश्चियनमतावलम्बिन इतरे च न तथा ऽनुतिष्ठन्ति परमद्य संग्राम काले मृतानां पुरुषाणांमदहेनन महतीमामयजनकां पूतिगन्धिमसहमानैस्तैरेव क्रिश्चियनमतावलम्बिभिरस्माकम्प्राचीन एव सिद्धान्त उररीकृतः। इदानीं सर्वेष्वपि फ्रान्स जर्मन्यादिषु देशेषु मृतानां शवा दह्यन्ते अतो युरोपदेशे आर्यजातेः सिद्धान्तस्य विजयनादमिमाकर्ण्य कस्यार्यरक्तसमुद्भूतस्य हृदयं नोल्लसति।

—:०:—

इदानीमेव पातालदेशस्य कस्यचित् समाचारपत्रस्य डेलगर्ड नामा सम्पादकः शार्मण्यदेशवासिभिराक्रान्ताद्बिलजियमदेशान्निजं देशं प्रति तत्रत्यमितिवृत्तमवलोक्य समागच्छत्। स ततः प्रत्यागतस्तत्रत्यैःपातालवासिभिः क्षुधार्तान् बिलजियमवासिनः सान्त्वयितुमुत्थापितं किमपि महत्कार्यमस्मानावेदयति। स वर्णयति यत्तैरेका ऽन्नपानादिकमानीयैकत्रीकर्तुं कोचिन्महत्यस्ति जातीयासभा स्थापिता। अस्यामुख्यमुद्देश्यं केवलं शार्मण्यवासिनामाक्रमणैर्जर्जरितानकिञ्चित्करान् धनहीनान् दरिद्रान् मृत्युमुखात् संरक्ष्य मनुष्यतायाः स्थापनं नाम। प्रभृता सन्ति तस्याः सभासदा ये ऽवैतनिका एव सन्तस्तस्यां कार्यं कुर्वन्ति। स्वयं तस्याः प्रबन्धकर्ता ऽपि वेतनमनादायैव सकलं कार्यं करोति। अस्या मासिको व्ययः पञ्चदशलक्षपौण्डमितो भवति। अहो तेषामियं निःस्वार्थवृत्तिरहो तेषामयं साहसः। धन्या

खलु सर्वथा ते परोपकारैकपराः। न जाने कदा भारते ऽपि प्रादुर्भविष्यन्त्येतादृश्यः सेवासमितयो यैरस्य नीचकुलजाः पुत्राः समुत्थाप्येरन्।

—०—

गुरुकुलेतिवृत्तम्। अद्यत्वे ऽत्र वर्षर्तोः प्रारम्भात् सर्वत्रैव सुखमयो ऽस्ति संवृत्तः संचारः। परितो निदाघस्य प्रभावमपनयन्ति हरितानि विलसन्ति काननानि महान्तमस्मान् मनोमोदमर्पयन्ति। ब्रह्मचारिणां तावदिदानीमस्ति सत्रान्तपरीक्षालक्षणः समाप्तो वार्षिकश्चावकाशो ऽस्ति प्रारब्धः। उपाध्याया अध्यापकाश्चावकाशं गृहीत्वा निजं निजं देशं प्रति गताः। ब्रह्मचारिणां नाधुनापर्यन्तमस्मिन् वर्षे कश्चिद्विशेषो ऽस्ति विहितः सरस्वतीयात्रायाः प्रबन्धः यस्यात्रोल्लेखः स्यात्। केचिदेवास्वस्थाः स्वास्थ्यमधिगन्तुं सन्ति कांश्चिन् स्वास्थ्यप्रदान् देशान् प्रति गताः। सकलमन्यदत्र शमस्ति सर्वेषाम्।

—०—

# उषाया नियमाः *

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते. किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः .सर्वतोऽप्यधिको यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति। येन मनागपि संस्कृतमवबुध्यमानानामर्थविबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥≈) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याङ्कस्य मूल्यं द्वावाणकौ ≈) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं गृहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्यामभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्र ग्राहकसंख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकाया कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्यये यद्यस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः। अयुक्तानि विज्ञपनानि न जातु स्वीकरिष्यन्ते।

प्रबन्धकर्त्ता
"उषा"
गुरुकुल कांगड़ी

 डा० शामपुर

Registered Number A. 639.

* ओ३म् *

# उषा

( संस्कृतमासिकपत्रिका )

उषा अजीगर्भुवनानि विश्वा । ऋग्वेदे ।

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः ।
विगलतु जनतान्धकारलेशः, प्रसरतु देवगिरामुषाविशेषः ॥



× × ×


कांगड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता, प्रकाशिता च

* ओ३म् *

# उषा

( संस्कृत मासिक पत्रिका )

द्वितीये वर्षे | * * ज्येष्ठाषाढौ * * सं० १९७२ वि० | षष्ठ एवं सप्तमोऽङ्कः

## प्रार्थना ।

दीन दयाकर शिवशंरूप ! करुणामयजगदन्तः
कालकरालपिशाचसरूपं, दुःखभरं हरदेवः ! ॥

दीनदशाकरुणाकर देव ! पारय मां हि जगत्तः
पापविहीनं मानससारं, शोधय दीनदयालो ! ॥

शैशवकालः खेलालोलः, यौवनकं भृतमानम्
पुत्र पौत्र वशचिन्तासारो, मरणभयो जरठोन्तः ॥

प्रतिपदचिन्ता प्रतिपददुःखं, प्रतिपदमभयममानः
नित्यमेव करुणाकर देव ! मानन दूनन रूपः ॥

दीनदयालो ! दयया दयतां, वैभवलीनजनोऽयम्
साञ्जलिबन्धं देव ! नमस्ते, नित्यमेव विदधामः ॥

# कः श्रीमान् ।

आश्वास्य पर्वतकुलं तपनोपतप्तं ।
दुर्दावविह्विधुराणि च काननानि ॥
नानानदीनदशतानि च पूरयित्वा ।
रिक्तोऽसि यज्जलद सैष तवोत्तमाश्रीः ॥

ज्ञान चक्षुषोऽशुभिः प्राक्परागवाग्दर्शिनः खलु वहवो मुनयः प्रश्नमेतं सम्यक्तया मनस्याधाय स्पष्टमुत्तरीतुं प्रायतन्। किन्तु कतिपय एव विततविज्ञानोदधौ पारंगताः कथंकथमप्यस्योत्तरं समासादयन्। तत्राऽहमिदानीं चक्षुः सूर्यमिव तेषां तेजांस्येव सहाय्यमासा दयत् कथंकथमप्यर्थंस्पष्टीकर्तुमत्रप्रयतिष्ये तत्सावधानैर्वाचकाः! युष्माभिरध्येतव्यम् ।

अत्र वहवः करवालवर्तिकास्तृतयशोविलासा दीपा इव समराङ्गणे ज्वलन्तः श्रीमन्त इति। परे तरणिरिव जगज्जलधेर्धनजलानाहरन्तः श्रीमन्तइति। अन्ये सकलशास्त्रतरुकुसुमगन्धैरावासितहृदया मलयगिरिवनराजय इव राजमानाः श्रीमन्त इति। इतरे सन्तोषसरितां पयःप्रवाहैः पूर्णाः शान्ताः सिन्धव इव तिष्ठन्तः श्रीमन्त इति। अपरे परमापितुः भक्तिरसे प्लावितहृदयाः स्फटिकमणय इव कान्तिमन्तः श्रीमान्त इति एवमेव केचित् दुःखतमसि विभ्रान्तानां साहाय्यकर्मण्यग्रे पदम दधानाःकेऽपि यशोराजिभिर्विभ्राजमानाः करशरणस्थितभिर्जनताभि रुपश्लोक्यमाना विधुरिवजगतामाहलादकारिणो द्युतिमन्तः श्रीमन्त इति।

अस्तु! सन्त्येवमन्या अपि वहूनां सम्मतयः। यायाः नात्रोदीरयितुमवसरः, किन्त्वत्र गहनामिदानीं प्रचुरमार्गटिकायुतामटवीमिवा-

ऽऽपतिता वयंनाऽध्वानमधिगच्छामो येन श्रीमतां धुरि स्थापनीयाः स्याम ।

किं वयं सकलनरपतिकुलं पादतले न्यस्येन्द्रवद्वर्तामहे येन श्रीमन्तः स्याम ? किं वा देशदेशान्तरेभ्यो वसून्याचित्य कुबेरमपि समरे समाह्वयामहे येन श्रीमन्तः स्याम ? किं वा सर्वस्वदक्षिणया ब्रह्मर्षीनर्चयित्वा राजर्षितिलकं रघुमनुकुर्महे येन श्रीमन्तः स्याम ? किंवा विषमेन ज्ञानाग्निना मुहुर्मुहुर्दह्यमानाः स्वर्णवद्देदीप्यामहे येन श्रीमन्तः स्याम ? किं वा निशिते धर्मस्य पाथिवर्तमानाः शान्तोदन्तानामृषीनां चरितान्यनुवृणीमहे येन श्रीमन्तः स्याम ? अथवा दृढतरैः सत्यतन्तुभिर्विहिते पाशे पतिता हरिश्चन्द्रादिवदिह जीवामहे येन श्रीमन्तः स्याम ? इति न बहुधा चिन्त्यमानैरप्यस्माभिः किंचिदप्याकलितम्

अस्तु नाम कश्चिदपि मार्गः किन्तु भोः उपरोक्तानि खलु कर्माणि न बहुलं प्राकृतैरपि शक्यानिकर्तुं ग्रामनगरजनपदवास्तव्यैस्तर्हि क यत्सत्यं यत्ते चातकाः शिशिरजलधरमिव तच्छ्रीमतां पदं द स्पर्शी निराशा नाम तिष्ठन्तु ? न हि भोः । नेयं ब्रह्मणो न्यायोपवर्णिता तेन खल्वेवंविधेन भवितव्यं यत्प्राकृतै रप्यासादनीयं स्यात्स्थानम् एवं गते नाधुनापि किञ्चित् पराग् प्रतिनिवृत्ताऽस्मदीया शंका अस्तु कुतश्चिदन्यतोऽस्योत्तरंमृगयामः ।

इयमेव महती शङ्का यत् केयं खलु श्रेष्ठानां श्रीमतां पदवी ? खल्वनुकुर्वीमह्यप्राकृता जनाः ? को मार्ग परममुद्देश्यमासादयति इति, अस्ति गीतायामप्युत्थितम् । तदा परमात्मभावमन्तराधाय संशयतमसामपहन्ता पुण्यश्लोको भगवान् श्रीकृष्णः समाज यत् " मम वर्त्माऽनुवर्तन्ते मनुष्याः पार्थ सर्वशः ,, इति । मननशीलाः ज्ञानिनः परमात्मानमनुकुर्वन्त इत्याशयः । श्रीमत्पदमभिलाष

णामनुसरणीया पदवी भगवता श्रीकृष्णेनाभिहिता । कुतः ? इत्यग्रे ऽनुसंदधामः ।

सर्वाण्येतानि खलूपरिवर्णितानि कार्याणि कियन्त्यपि महान्ति स्युः किन्त्वेतानि न नरैर्महतोमहता केनचित्कृतान्यतो न परमं पदमधियापयितुं समर्थानि । अतः श्रीमतः पदवीमधिष्ठातुं सकलजनदुर्लभः कोऽपि महतोमहाननुकरणीयः । तत्कोयऽमिति नाऽस्माकमत्र साधयितुमाग्रहो यतो न कस्मादप्ययं तिरोहितो वर्ततेऽर्थः

किमप्यासीदुदितं सूर्येण किञ्चिदेवासीद्विकसितं हृदयकमलेन किन्तु हन्त ! घोरैः खलु जिज्ञासावारिवाहैः सकलमप्येकपद एवाकुलायितम् इदानीं कथमयं सर्वशक्तिमान् विश्वव्यापी जगदीश्वरोऽनुकरणीय इति महतीयमापतिता जिज्ञासा । तत्किमत्र प्रतिविधानीयं स्यात्? न खलु भोः! त्वरायितेन, किञ्चिदवहिताः सन्त इदानीमपि जिज्ञासूनां समाधायकं तमेव भगवन्तं श्रीकृष्णं शरणं यामः । अत्राऽपि परमात्मभावमाधायासौब्रवीति

"यदा यदाहि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाह्म्यम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे, २॥

अर्थादभ्युत्थितेऽधर्मे जगदीश्वरो धर्ममास्थाप्य साधूनां रक्षार्थमात्मानं सृजति भावयति वाऽर्थात्स्वप्रभावं दर्शयति स्वनियतं कार्यं वाकरोतीत्याशयः । अतः सर्वस्य निर्गलितो ऽयमर्थो यदधर्मे वि-

नाश्य यथाशक्ति जगतां परिपालनं कर्तव्यमिति। अतोऽयिवाचकाः! श्रीमतां धुरिस्थातु निःस्वार्थतया हीनानुद्धारयत दीनान् परिपालयत, खिन्नानाश्वासयत, क्षीणान् संवर्धयत, भिन्नान् परिपोषयत, नष्टानुपजीवयत, क्लिष्टानुपशामयत, दुष्टान् व्यपनाशयत, इत एव प्राप्ता श्रीः सत्या, इत एव प्राप्ता श्रीः मङ्गला, इयमेव वेदानो मुक्तिः अयमेवोपनिषदां सारः इदमेव कवीनां भणितमित्योम्।

---

## क्षुधार्त्तोक्तिः।

( १ )

अनल! किमिह रोषस्तावकीनः प्ररूढो
मयि भृशमबलाशे हा विनाशे कृताश!।
उपशममविलम्बेनावलम्बस्व भद्र!
बहुलबलवतस्ते दाह्यमस्त्येव वस्तु॥

( २ )

विपदुदधि निमग्नाजते देश एष
हसित विपुल वाधा क्रदन्ते दीनमाला।
कठिन-कर सहायो नाशयैषां मनः स्था-
मविरतमतिपीडां ज्वालया भूषिताङ्ग!॥

( ३ )

तपति दिनकरोऽयं ज्येष्ठमासेऽतिधाम्ना
भवति तदनुहेतुर्नीरदालीकुलस्य ।
त्वमपि कुलगुरोस्तद् वृत्तमेतद् विभाव्या-
पनय विकलतां मे शीतवारां प्रवाहैः ॥

( ४ )

अकरवमभितस्ते जन्मतो वीररक्षां
हृदयमिव निधाय स्वोदरे त्वां स्वबन्धम् ।
सुहृदिव मयि नीत्वा कंचिदाशेव कालं
भवसि विमुखवृत्तिर्लज्जसे नोक्तिमर्थम् ॥

( ५ )

अदयहृदयतां चेदाश्रयन्निस्त्रपः सन्
वससि कुहरदेशे मांसमात्रावशेषे ।
"व्यरचि भुवि विधात्रा भोज्यमन्नं ममे"ति
वृहन् ! कृतविचारोनीनशो मोदरं मे ॥

वासवः

* अनलादिपदैरत्र जठरानल ग्रहणम् ॥

# महाभारतकालस्यादर्श वर्णव्यवस्था

अद्यत्वे जगति वर्णव्यवस्था विषयको महान् संग्रामः संजायते यद्वर्णव्यवस्था गुणकर्मानुसारिणी स्यादुत जन्मानुसारिणीति। भारतवर्षेतु प्रायशः प्रतिदिनमस्या एव कलहः श्रूयते न च निर्णय एवाभिलक्ष्यते। प्रतिदिनञ्चाधोऽधोयाति भारतञ्चः हेतुरिष्यते चे-त्तदा को न वक्तुं शक्नोति यन्मूलकारण मियमेव जन्मानुसारिणी वर्णव्यवस्थाऽस्ति। यतो हि कोऽपि देशस्तदैवोन्नतिपथमेतुं शक्नोति यदा च तस्मिन्नाचारस्य विद्यायाः धनस्य च बाहुल्यं स्यात्। यदा च तस्यदेशस्या ध्यात्मिकी दशा साध्वी स्यात्, तत्रत्यानां जनानाञ्च मानसिकी शारीरिकी च दशा उन्नता स्यादिति।

आचारविद्याधनानामुन्नतिः शरीरात्मनसां समुन्नतिश्च वर्ण व्यवस्थानुगामिनी विद्यते। यस्मिन् देशे गुण कर्मानुसारेण जनानां वर्णानि पदानि च भविष्यन्ति तस्मिन्नेव ध्रुवमाचारस्य विद्याया लक्ष्म्याश्च निवासो भविष्यति तत्रैव जनानां शरीरात्ममनसामुन्नतिः। यत्र हि जन्मानुसारिणी वर्णव्यवस्था तत्रैव सर्वनाशो भविष्यति यथाचाद्यत्वे भारते दृश्यते। जन्मानुसारिणी वर्णव्यवस्था लोभेना-विद्यया च समागच्छति देशे तदैव सर्वनाशोऽपि निश्चितएवास्ति यदाचास्माभिर्महाभारतकालस्येतिहासं दृश्यते तदा प्रतीयते यत्त-दाऽप्यादर्शवर्णव्यवस्था गुणकर्मानुसारिणी एव जनैर्मन्यतेस्म। इतः पूर्वं रामायणकाले तु निश्चितमासीदेव गुणकर्मानुसारिणी वर्णव्यवस्थेति। न चात्र रामायण कालस्य गुणकर्मानुसारिणीं वर्ण-व्यवस्थां दर्शयितुमिहास्माकं प्रयत्नः किन्तु पतिते महाभारतकाले-ऽपि गुणकर्मानुसारिण्येव वर्णव्यवस्था जनानां सिद्धान्ते आसीत्तै-रिदं मन्यते स्म यद्धर्मशास्त्रेषु जन्मानुसारिण्याः वर्णव्यवस्थायाः विधानं नास्ति अपितु गुणकर्मानुसारिण्या एवेति। तथा च महा-भारते शान्ति पर्वणि १८८ अध्याये भृगुभारद्वाजयोर्वर्णव्यवस्था विषयको संवादोऽस्ति तत्रापि गुणकर्मानुसारिणी वर्णव्यवस्था साध्वीत्येव निश्चयो दृश्यते। यथा चः—

भारद्वाजः—जङ्गमानामसंख्येयाः स्थावराणाञ्च जातयः
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥

शा० प० १८८ अ० ६ श्लोक

भृगुः— न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्
ब्रह्मणा पूर्वंसृष्टं हि कर्मभिर्वर्णतां गतम् ॥

शा० प० १८८ अ० १० श्लोक

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः
त्यक्त स्वधर्मा रक्ताङ्गास्ते द्विजा क्षत्रतां गताः ॥

शा० प० १८८ अ० ११ श्लोक

गोभ्यो वृत्तिं समास्थाय पीताः कृष्युप जीविनः
स्वधर्मान्नानुतिष्ठन्ति ते द्विजाः वैश्यतांगताः ॥ ...१२श्लो०

हिंसानृत प्रियालुब्धाः सर्वकर्मोपजीविनः
कृष्णाःशौचपरि भ्रष्टास्ते द्विजाः शूद्रतां गताः ॥...१३श्लो०

इत्येतैः कर्मनिर्व्यस्ता द्विजा वर्णान्तरंगताः
धर्मो यज्ञक्रिया तेषां नित्यं न प्रतिषिध्यते ॥ .. ...१५ श्लो०

भारद्वाजः—ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम
वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतांवर !

शा० प० १८६ अ० १ श्लो०

भृगुः—जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः ॥... ... २ श्लो०

शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः
नित्यव्रती सत्यपरः स वैब्राह्मण उच्यते ॥... ... ३ श्लो०

सत्यं दानमथाद्रोह आनृशंस्यं त्रपाघृणा
तपश्च दृश्यते यत्र स ब्राह्मण इतिस्मृतः ॥ ...... ४ श्लो०

क्षत्रजं सेवतेकर्म वेदाध्ययनसङ्गतः
दानादानरतिर्यस्तु सवै क्षत्रिय उच्यते ॥... ... ५ श्लो०

विशत्याशु पशुभ्यश्च कृष्यादान रतिः शुचिः
वेदाध्ययन संपन्नः स वैश्य इति संज्ञितः ॥ ... ... ६ श्लो०

सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः
त्यक्तवेदस्त्वनाचारः सवै शूद्र इतिस्मृतः ॥ ... ७ श्लो०

शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते
नवै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो न च ॥ ... ८ श्लो०

निर्वेदादेव निर्वाणं न च किञ्चिद्विचिन्तयेत्
सुखं वै ब्राह्मणो ब्रह्म निर्वेदेनाधिगच्छति ॥ ... १७ श्लो०

अस्मिन्नेव शान्तिपर्वणि ६३ अध्याये ब्राह्मणस्य विशेषणानि प्रदर्शितानि, यत्केके ब्राह्मणाःस्यु स्तद्विरहितेच पुरुषे ब्राह्मणत्वमसम्भवम्। यथाचः—

यः स्याद्दान्तः सोमपश्चार्यशीलः सानुक्रोशः सर्वसहो निराशीः।
ऋजुर्मृदुरनृशंसः क्षमावान् सवै विप्रोनेतरः पापकर्मा ॥
शा० प० ६३ अ० ८ श्लो०

भैक्ष्यचर्य्यां ततः प्राहु स्तस्य तद्धर्मचारिणः।
तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैवहि ॥
शा० प० ६३ अ० १५

कृतकृत्यो वयोतीतो राज्ञः कृतपरिश्रमः।
वैश्यो गच्छेदनुज्ञातो नृपेणाश्रमसंश्रयम् ॥
शा० प० ६३ अ० १५ श्लो०

अस्यैव पर्वण ६४ अध्याये लिखितमिदमस्ति यद्यपि ये आश्रमाः ब्राह्मणानामुक्ताः यानि च कर्माणि ब्राह्मणानामुक्तानि सन्ति तानि यदि

कश्चिद्ब्राह्मणः नैव परि पालयति तदा स तथैव दण्डनीयो भवति यथाच शूद्रः । अनेन सिध्यति यद् ब्राह्मणोऽपि शूद्रत्व मागन्तुं शक्नोति यदि च स धर्मशास्त्रप्रतिपादितानि धर्माणि कर्तव्यानि च न करोति ।

यथा चः—

त्रैविद्यानां यागतिर्ब्राह्मणानां ये चैवोक्ताश्चाश्रमा ब्राह्मणानाम्
एतत्कर्म ब्राह्मणस्याहुरग्र्यमन्यत्कुर्वञ्छूद्रवच्छूस्त्रबध्यः ॥ ८ श्लो०

इत्थञ्चवनपर्वणि १८० अध्याये नहुषयुधिष्ठिरयोः संवादोऽस्ति तत्राप्ययमेवनिश्चयः । यथाचः—

नहुषः—ब्राह्मणः को भवेद्राजन् वेद्यं किञ्च युधिष्ठिरः
ब्रवीह्यतिमतिं त्वांहि वाक्यै रनुमिमीमहे ॥

व० प० १८० अ० २० श्लोक

युधिष्ठिरः—सत्यं दानंक्षमाशीलमानृशंस्यन्तपोघृणा
दृश्यन्ते यत्रनागेन्द्र स ब्राह्मण इतिस्मृतः ॥ ··· ··· २१ श्लो०

नहुषः—चातुर्वर्ण्यं प्रमाणञ्च सत्यञ्च ब्रह्मचैवहि
शूद्रेष्वपिचसत्यञ्च दानमक्रोधएवच ॥ ··· ······ २२ श्लो०

युधिष्ठिरः—शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्चनविद्यते
नवैशूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ ··· ··· २५ श्लोक

यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः
यत्रैतन्नभवेत्सर्प तं शूद्रमितिनिर्दिशेत् ॥ ··· ··· २६ श्लोक

जातिरत्रमहासर्प मनुष्यत्वे महामते
सङ्करात्सर्ववर्णानां दुष्परीक्ष्येतिमेमतिः ॥ ··· ··· २७ श्लो०

अग्रे चास्मिन्नेववनपर्वणि ३१२ अध्याये यक्षयुधिष्ठिरयोः संवादोऽस्ति यत्रायंनिर्णयोऽस्ति यत्पुरुषः कुलेन, स्वाध्यायेन श्रुतेन च ब्राह्मणो

भवितु न शक्नोमि किन्तु तस्य ब्राह्मणत्वे यदि च किञ्चित्कारण मस्ति तद् वृत्त मेवास्ति। तथा चः—

यक्षः—राजन् कुलेन वृत्तेन स्वाध्यायेनश्रुतेन वा
ब्राह्मण्यं केन भवति प्रब्रूह्येतत्सुनिश्चितम्॥

व० प० ३१२ अ० १०५ श्लोक

युधिष्ठिरः—शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतम्
कारणं हि द्विजत्वे च वृत्तमेव न संशयः॥

व० प० ३१२ अ० १६०

वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतोहतः॥

व० प० ३१२ अ० १०७ श्लो०

चतुर्वेदोऽपिदुर्वृत्तः न शूद्रादतिरिच्यते।
योऽग्निहोत्रपरोदान्तः स ब्राह्मण इतिस्मृतः॥

व० प० ३१२ च० १०६ श्लोक

लभ्यन्ते चैतादृशान्युदाहरणान्यपि यैरिदं सिध्यति यत्पुराकालेऽपि बहुभिर्वर्ण परिवर्तनं कृतं यथा चानुशासनपर्वणि ३० अध्याये लिखितमस्ति। यत्:—

विश्वामित्रेण च पुरा ब्राह्मण्यं प्राप्तमित्युत
श्रूयते वदसेतच्च दुष्प्रापमितिसत्तम॥

अनु० प० ३० अ० २० श्लोक

वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः
तदेव तावद् गाङ्गेय श्रोतुमिच्छाम्यहंप्रभोः ... ... ३ श्लो०

एवमन्येऽप्येतादृशाः पुरुषा असन् ये वर्णपरिवर्तनं कृतम्।
यथा चः——

(१) मातंगडश्चाण्डाल पुत्रः सन्नपि ब्राह्मणतांगतः ।
(२) गार्ग्यश्च शिनिका पुत्रः ब्राह्मण्यमुपगतः ।
(३) पुष्करुणिः, त्रेअरुणिः कविः इत्येते क्षत्रियपुत्राः सन्तोऽपि गुणकर्मवशात् ब्राह्मणत्व मुपगताः

इत्थञ्च प्रतीयते यत्प्राचीन काले तु गुणकर्मानुसारिणी एव वर्ण व्यवस्थासीत् । अत एवायं भारतवर्ष उन्नतेः शिखरंगतः अतएवायं सर्वदेशमूर्द्धन्यः सर्वदेशगुरुश्चासीत् । पर मद्यतस्मिन्नेवसर्वदेशगुरौ देशे भाग्यवशात् कालवशाच्च सर्वत्र ,सहाहाकारमार्तनादं प्रत्यहं श्रृणुमः । अयि मातृभूम्यङ्कलालिताः सुताः यदि पुनरपीच्छन्तिभवन्तः इमां दुखिनीं मातरं समाश्वासयितुं । यदि चास्या विमलमाननं पुनरप्युज्वलं द्रष्टुमिष्यते । यदि च भरताद् दारिद्र्यस्य राज्यं विनाशयितुमिष्यते, यदि च पुनरपि इन्द्रासनसुखमाप्तुमिष्यते भवद्भिस्तदा गुण कर्मानुसारिण्या एव वर्ण व्यवस्थाया प्रचारे प्रयतनीयमित्योम् ।

मधुपः

———

# प्राचीनसमये जलसिञ्चनविभागः ।

यवन लेखकेन मैगस्थनीजेन एकस्मिन् स्थले भारतस्य जलसिञ्चनविधिः सविस्तरं वर्णितः । तस्य कथनमस्ति यद्भारतवर्षस्याधिको भूभागो नदीमातृकः कूपादिमातृको वाऽस्ति । अतएव तत्रेयं किंवदन्ती सर्वत्रैव प्रचलितासीत् यदयं "देशः न कदापि दुर्भिक्षेणाक्रान्तः' चन्द्रगुप्तनियुक्ताः देशे जलसिञ्चननिरीक्षणायैव वहवः कर्मचारिण आसन् । योहि विनैवाज्ञां जलं गृह्णातिस्म स अपथगामी राज्ञा दण्डनीयो भवतिस्म ।

कौटिल्य विरचितार्थशास्त्रेणापि मैगस्थनीजस्य कथनं प्रकामं परिपुष्टं जायते । द्वितीयाध्याये सीताध्यक्षप्रकरणे वयमेवं पश्यामः—

हस्तप्रावर्तिमयुदभागं पञ्चमं दद्युः ।
स्कन्ध प्रावर्तिमं चतुर्थम् ।
स्रोत यन्त्र प्रावर्तिमं च तृतीयम् ।
चतुर्थं नदीसरस्तडाग कूपोद्घाटम् ॥

B. K. II: सीताध्यक्षः पृ० ११७

एवमेव वात सञ्चालितेन यन्त्रेणापि जल निष्कासनं तस्मिन् काले जना विदध तिस्म ।

वातप्रवर्तिमनन्दि निबन्धायतन तटाककेदाराराम षण्डवापानां सस्य वर्ण भागोत्तरिकमन्येभ्यो वा यथोपकारं दद्युः ॥

एवमेव जलनिष्कासन द्वाराणां वर्णनमप्येकस्मिन् स्थले वर्तते ।

सेतुभ्यो मुञ्चत स्तोय मपारे षट् पणो दमः
पारे वा तोय मन्येषां प्रमादेनोपरुन्धतः

सीताध्यक्षे—देशानां वर्णनं वर्तते यत्र कुल्याभिरेव जलसिञ्चनं भवतिस्म। तद्यथा "अभितं वर्ष प्रमाणं हैमन्यानाञ्च कुल्यावापानम्। अस्य परिणामोऽयसभूयद्दुर्भिक्षपिशाचस्यमुखं चिरं भारतीयैर्नदृष्टमासीत्। परमिदानीं भाग्यवशात्सर्वमपि विप्रतिमन्नम् यवन राज्यकालेऽपि नासीत्तावान् भारते दुर्भिक्षप्रकोपः यावाद्यत्वे दृश्यते। तत्र कारणमिदमासीत् यद्यवनराज्यकाले जलसिञ्चनस्य महान् प्रबन्ध आसीत् इदानींतु अग्नियान निर्माणे यावान् प्रयासः न तावान् कुल्यादिनिर्माणे—अतएवाद्यत्वे दुर्भिक्ष प्रकोपोऽपि सततमुपचीयत एव तद्द्रष्टव्यम्:—

| खिष्टाब्दः | | आंग्लराज्यात्पूर्वं दुर्भिक्षसंख्या |
|---|---|---|
| ११ | शताब्दौ | २ |
| १३ | ,, | १ |
| १४ | ,, | ३ |
| १५ | ,, | २ |
| १६ | ,, | ३ |
| १७ | ,, | ३ |
| १८ | ,, (१७४५) | ४ |

आंग्लराज्ये

| खिष्टाब्दः | दुर्भिक्ष संख्या |
|---|---|
| १८००—१८२५ | ५ (१००००००) मृत्युः, |
| १८२६—१८५० | २ |
| १८५१—१८७५ | ६ (५०००००) जनानां मृत्युः |
| १८७६—१९०० | १८ (२६००००००) ,, |

अन्तिमे पञ्चविंशतिवर्षे भारते प्रतिपलद्वा जनौ मृत्युं गतौ। इदानीं प्रतिवर्षं दुर्भिक्षः क्रन्दयति भारतम्। अयमस्माकं हर्ष विषयः यद्राज्ञा सम्प्रति विशिष्टंध्यानमे तदर्थं विहितम। जगदीशकृपालतः सर्वेऽपिवयंभारतीयाः सुखिनः स्याम—अपक्रामतु दुर्भिक्ष पिशाचः जलेन सिक्ताभूः सस्यश्यामला भवतु—सर्वं शुभमस्तु।

पारदर्शी

# भारतीयानाम् विचारपारतन्त्र्यम् ।

१–को नाम साम्प्रतमधन्यो भारतीयो भवेत् यः खल्वद्यापि परतन्त्रतानिबिडशृङ्खलानिगडितं नात्मानमनुभवति । चिरात् खलु भारतीयाः गगनाङ्गणमपि भिन्दानेन पारतन्त्र्यध्वनिना सतारस्वरमाक्रन्दन्ति । न केवलमाक्रन्दनादेव परितुष्यन्ति प्रत्युत तदपनेतुं बहुतरं प्रयतन्तेऽपि । परं हन्त भोः ! सत्यपि इत्थंविधे व्यतिकरे परतन्त्रता पिशाची भारतान्नतरान्निष्क्रामति । नूनं गुरुणा खल्वत्र कारणेन भवितव्यं यत् कृतेऽपि यत्ने समीहितं न सिद्ध्यतीति ।

२–अत्र वयं तावदित्थं सम्भावयामः–यथा ज्वरादिव्याधेः भेदम परिज्ञाय शतशोपि तत्र प्रशमोपायाननुतिष्ठन्तो न वयं कृतकृत्याः भवामस्तथैव इहापि भारतस्य परतन्त्रतायाः भेदावधारणमन्तरेण शतशोप्युपायाननुतिष्ठन्तो न पारयामस्तत्र प्रतिविधातुम् । तस्मात् पराधीनतायाः मुख्यं भेदमेव तावदवधारयामः मुख्यं भेदमेव तावदवधारयामः यस्मिन्नवगते द्रागेव फलमुपभुञ्जीमहि ।

३—तत्र भेदावधारणे बह्व्यो विप्रतिपत्तयः सम्भवन्ति । तत्रैके तावत् भारतीयानां शारीरिकीमेव परतन्त्रतामाहुः, अपरे च कायिकीं वाचिकीं च । अन्ये पुनस्त्रिविधां मन्यन्ते, द्विविधां पूर्वां मानसीं च तृतीयाम् । तत्र यत्सत्यं विविधास्वपि खल्विमासु प्रथमा तावत् पराधीनता अपरासां यद्यपि निदानभूता तथापि साम्प्रतम् भारतीयानां त्रिविधेऽपि पारतन्त्र्ये तृतीयमेव मूर्द्धाभिषिक्तं सम्भावयामः ।

४—तदिदं गुरुशिष्ययोरुदाहरणेन निदर्शयामः । तद्यथा अनियमे वर्त्तमानमन्तेवासिनं अध्यापकः चपेटाप्रहारेण उपायान्तरेण वा केनापि शिक्षयति । गुरुस्तावदेतावता आत्मानं कृतकृत्यमभिमन्येत । परं वयं तु पश्यामः यदि दैवात् छात्रो मनसा गुरोराज्ञां न पालयति तर्हि नूनं गुरोरसन्निधौ मनागपि तदुक्तिं नाद्रियते । न केवल मनाद्रियते प्रत्युत तमपहसत्यपि । विपर्य्यये यदि गुरु छात्रस्य मनो वशी-

करोति आवर्जयति वा नूनं छात्रोप्येनं सततमनुवर्त्तते। न जातु तदा-ज्ञामतिवर्त्तते।

५—तदिदं दार्ष्टान्तिकेपि शक्यं योजयितुं। यत्सत्यं भारतं वशी-कुर्वद्भिराङ्ग्लैः प्रारम्भे तावत् वयं अस्मदीयबलप्रयोगेणैव पराजिताः इदानीमेभिरस्माकं शारीरमेव राज्यं स्वहस्तायितम्। परं हन्त भोः अद्य तु किंचिदन्यदेव लक्ष्यते। साम्प्रतं तु प्रायेण भारतीयानां मनो-राज्यमपि तेषां हस्ततलगतमिवालोक्यते। विहाय द्वित्रान् गुरुकुला-दीन् देशीयविद्यालयान् प्रायेण सर्वत्रापि भारते राजकीय विश्व-विद्यालयेषु तत्रस्था आंग्लाः यथाभिमतमध्यापयन्ति आत्मीयानां विदुषां बुद्धिप्रकर्षं ख्यापयन्तः भारतीयानां विदुषामपकर्षमातन्वते। विद्यार्थिनोपि श्रद्धेयतया सत्यमित्याकलयन्तो यथाश्रुतमनुवर्त्तन्ते। प्रतिपदं हरिवर्षस्थान् विशेषतश्चांग्लानकारणमेवाभिनन्दन्ति। स्पै-न्सरामल्लप्रभृतीन् आंग्लदेशीयान् साधारणानपि दार्शनिकान् बुद्धेरव-तारानिवाभिमन्यन्ते, यद्यपि हरिवर्षे परःशताः दार्शनिकास्तानतिमात्रं बुद्धावतिशेरते। किं बहुना, दारुपाञ्चालिकामिव नवशिक्षितान् भार-तीयान् आंग्लाः यथाभिलषितं विनर्त्तयन्ति। भारतीयाश्च अर्थानर्थं मनागपि विवेचयन्ति। आँग्लैश्चेच्चन्द्रेपि सूर्यशब्दो व्यपदि-श्येत, द्रागेव भारतीयैस्तदभ्युपगम्येत। हन्त भोः! किमतः परमपि कष्टं स्यात् यत्ते संस्कृताभिज्ञानां मैक्समूलर—मैकडानल प्रभृ-तीनामाँग्लानां वचनेषु ( यद् भोः! युष्माकं पूर्वजाः असभ्याः केवलं पशूंश्चारयित्वा वृत्ति—मुपजीवन्तिस्म, किंच वेदास्तावदुन्मत्तप्रलाप-प्राया एवेति ) विश्वसन्तः सधन्यवादं कथयन्ति—" आम्। तथैव यथाहुः श्रीमन्त " इति।

६—तदित्थं परां काष्ठामुपगताः स्म साम्प्रतं विचारदासतायाः। यदि नैषा निवार्य्यते तदा यत्नान्तर—शतेपि क्रियमाणे न भारता-भ्युदयः सम्भवति। आँग्लदेशीय सीलेमहाशयः स्वयमेवाह—"अ-स्माकं तावदेव भारते स्थितिर्यावद्भारतीया आत्मन उत्कृष्टतरां सभ्य-तामनावबुध्यन्त" इति। यत्सत्यं श्रूयते यत्खलु एकदा कयोश्चिदपि वानवणिजोर्मध्ये मल्लयुद्धं प्रवृत्तम्। तत्र वणिजा प्रथमं पठानोऽध-

स्तात् पातितः । परं क्षणान्तरे पठानेन पृष्टम् को भवानिति स आह वणिगस्मीति । तदिदं निशम्यैव जात्यभिमानेन सहसोत्थितः अतितर लज्जितश्च पठानश्चिन्तयामास हन्त भोः ! धिङ् मां क्षत्रियं, यद्वणि जापि पराभूतोस्मीति ।

तदित्थमेव साम्प्रतं विचारदास्येनाभिभूता वयं नात्मनः प्राचीन गौरवमधिगच्छामः । मन्ये यदैवास्माभिः तदधिगतं, तदैव जात्यभि मानोन्नतानस्मान् कश्चनापि पराभवितुं नोत्सहेत । तस्माद्वयं पश्यामः यत् उपायान्तराणि परिहाय प्रथमं भारतीयानां मनः भारतस्य वास्तवं गौरवमास्थापनीयम् । ततः परं किंचिदन्यदनुष्ठात व्यमिति शम् ॥

विद्या सागरः

# संस्कृतसाहित्येतिहासः।

अचिन्तनीयानि किल विधेर्विलसितानि प्रायो विधिरयं विचित्रमेव घटयति। यदस्मच्चेतसि न कदापि समाविष्टं तदेवैष स्फुटयति। यदस्मै साधारणं तदेवास्मभ्यमसाधारणं नियमोऽयं विधेः। कथमन्यथा सकलभाषाभूषणीभूता देववाणी स्वचरित विरहिताभ्मजते। याः भाषाः संस्कृतदेव्याः पादरजः क्षालनेऽप्यक्षमास्तासामवलोक्यन्ते सम्पूर्णाः सन्तोषदाश्चेतिहासाः। इयं तु पुनः देववाणी इतिहास रहिता मूलहीना लतेव वियति निराधारं लम्बमानावलोक्यते नाद्यापि केनापि संस्कृतविज्ञेन संस्कृतेतिहासलेखने प्रयत्नः कृतः। स्वत एव भासमानेयं देवभाषा स्वपूर्वदशावर्णनं गौरवाय नापेक्षते, अन्यद्वा किमपि कारणं येनास्या इतिहासः केनापि नोपनिबद्ध इति न जानीमः।

नास्माकमभिप्रायः यत् सर्वथापि देववाण्या इतिहासो नोपलभ्यते, किन्तु किंचिन्मात्रमुपलभ्यत एव परं यत्किंचिदप्युपलभ्यते न तत् संस्कृतस्य गूढतत्त्वविज्ञैरुपनिबद्धम्। तेषांलेखकाः मोक्षमूलर-मुग्धानल-वीवरादय पाश्चात्या एव। न वयमेतेषां पाश्चात्य विदुषां पाण्डित्ये संदिहामहे। येषामनवरत परिश्रमे, तैरुपनिबद्धानि ग्रन्थनिचयान्येव प्रमाणं, कथं तत्परिश्रमे वयं संशयेमहि।

किन्तु तेषां संस्कृत विषयिणीमनभिज्ञतां न कोऽपि गोपयितुं शक्नोति। ते सर्वेऽपि पाश्चात्यपण्डिताः फ्रैंञ्च-लैटिनाद्यनेकभाषाविज्ञा अभूवन्, परं न तेषां संस्कृत साहित्येऽपि तावानेव प्रवेशआसीद् यावानन्यासु भाषासु। एतस्मिन्नेकस्मिन्नभावे अन्येऽपि सर्वेगुणाः नष्टप्रभा इव प्रतिभान्ति। यथा अनेक गुणगणालंकृतोऽपि रावणः केवलमेकराक्षसभाववत्तया न जगदुपकाराय समर्थोऽभवत् किन्तु अपकारायैव, एव मेवविविधविद्यानिष्णाता अपिते संस्कृतसाहित्यप्रवेशं विना न तदितिहास लेखनाय क्षमन्ते।

नापि पाश्चात्याः संस्कृतभाषायाः परम्पारमवाप्तुं कदापि शक्ष्यन्ति। नहि ते प्रायः शिष्यभावेन संस्कृत पण्डितानुपसीदन्ति। यद्यप्यनेके पाश्चात्यविद्वांसः बहुशः संस्कृतज्ञानां शिष्यतामुपयान्ति परं नैतेषां महती संख्या, अङ्गुल्यग्रेष्वेव ते गणयितुं शक्यन्ते। ये पुनः पण्डितम्मन्याः संस्कृतज्ञाचार्य्यपदभाजः, तैर्न गुरुजनेभ्यः सकाशादधीतम न च पाणिनीयमपि अष्टकमधीतम्। केषांचित् संस्कृतविदां साहाय्येन ते केवलमर्थावबोधन एव क्षमाः। नैतादृशेभ्यः संस्कृतेतिहासस्यतिरस्कारमन्तरेण अन्यत् किमपि सम्भाव्यते। किंच भारतीया अपि निजमातृभाषासाहित्यानुशीलने कृतप्रयत्नाः न प्रतीयन्ते। ऐतिहासिके विदुषि गुणत्रयमिष्यते। १ वस्तुविज्ञानं, २ समालोचना शक्तिः, ३ हृदयशुद्धता च। येन यस्यापि वस्तुन इतिहास उपनिबद्धुमिष्यते तेन तत्सम्बन्धिनीनां सकलानामपि घटनानां सम्यक् परिज्ञानमवश्यं कर्त्तव्यम्। अपरो गुणः समालोचनाशक्तिः यस्मिन्नरे नास्त्येषा शक्तिर्न स कथमपि कमपि विषयमनुशीलयितुं शक्नोति। न चैवंविधो मनुष्यः कस्यापि विषयस्येतिहासंलिखितुं समर्थः। प्रथमगुणाभावात् न पाश्चात्या संस्कृतेतिहासलेखने समर्थाः, द्वितीयगुणाभावाच्च न भारतीयाः। कस्मिंश्चिदपि विषये लेखनीयेसति हृदयशुद्धतापि आवश्यकीया। नह्यशुद्धहृदयेन केनापि कस्मिन्नपि विषये निरपेक्षा मतिर्दातुं शक्या।

एवमेतद्गुणत्रययुक्ताः संस्कृतेतिहासलेखने समर्थाः। नहि निजदासवद्व्यवहार्यजातेः शिष्यतामुपगन्तुमुद्यताः पाश्चात्याः। न च तेषां हृदयशुद्धता। अतः गुणद्वयविरहान्न ते ऐतिहासिकपदवीमुपगन्तुमर्हन्ति। परमनेन गुणद्वयेन युक्ताः भारतीया सुगमतयैव समालोचनाशक्तिमाप्तुं समर्थाः। अतएव भारतीया एव निज संस्कृतेतिहासलेखने सर्वथापि क्षमाः नेतरे।

अक,—आः ! दुर्विनीत ! प्रताप अद्यापि दिल्लीश्वरान्न विभेषि।

पुरुषः—प्रविश्य, श्रीमन् लोकनाथ ! राजराजेश्वर ! भवत्पादयोः किमपि निवेदयितुं समागतो ऽस्मि।

अक—विश्रब्धं ब्रूहि

पुरुषः—महाराज ! मेवाडाधिपतिः श्रीचरणारविन्दं मुहुर्मुहुरभिभूय अस्मान् आहृदयतलं व्यथयति। विश्वस्तरूपेण नः श्रुति पथम वतीर्णं यदभुक्त्वैव, श्रीमति मानसिंहे ऽपगते प्रतापेनाज्ञाप्तम् यत् "म्लेच्छराजस्यानुचरेण कलुषीकृतमिदं गृहं सर्वतोऽपि शुद्धिमर्हति" तमेवानुकृत्य सर्वेऽप्यन्ये सामन्ता 'इदं गृहं म्लेच्छराजस्य भृत्येन अपवित्रीकृतमित्यादिभिराक्षेपोक्तिभिर्गगनमण्डलमपूरयन् - तत्रत्यं कुट्टिममुत्पाट्य परिवर्त्तितम्। वस्त्राणि प्रक्षालितानि। होमादिकमनुविहितम्। महाराज ! एवं तस्मिन् दिने विषदिग्धाभिरिव जिह्वाभिः प्रतापस्य प्रजाजनैः श्रीचरणानामाक्षेपवचोभिरन्तरिक्षमेव प्रतिध्वनितम्।

अक,–आः धृष्ट,दुर्विदग्ध, दुरभिमानिन् (सहसा प्रविश्य पुरुषः)

पुरुषः—महाराज ! भारताधिपते भवच्चरणकमलचञ्चरीकोऽहं किमपि निवेदयितुं समागतोऽस्मि।

अक—त्वरितमुच्यताम

पुरुषः—नाथ सौराष्ट्र(सूरत) देशे व्यापाराय समुद्रोपकंठमुपसर्पतां यवन व्यापारिणाममितानि धनानि वस्तूनि च प्रत्यहं मेवाडाधिपतिना नियुक्तैः सैनिकैर्मार्ग एवाच्छिद्यन्ते यवनरक्षकाश्च पशुमारं हन्यन्ते। तदत्र श्री चरणाः प्रमाणम्।

अक—( सावेशम् ) आः ! प्रताप ! अद्यापि मुगलराजापथ्यान्न विरमसि। अद्यापि आर्य-राज्यस्य स्वप्नान पश्यसि। त्वमेवैको म्लेच्छराज्यमुन्मूलयितुं भारतीयानुद्बोधयसि तदिदानीं त्वामेव कथा-

शेषीकर्तुं प्रयते । ( इत्युत्तिष्ठति सर्वेचान्ये तमनुकुर्वन्ति ) सेनापते ! क्रियतां सेनासन्नाहः—

—:-( इति-निष्क्रान्ताः )-:—

# द्वितीयो गर्भाङ्कः ।

## ( स्थान मुदयपुर्या वीथिका )

एको नागरिकः—( सर्वत आलोकयन् साश्चर्यम् ) किमित्यहमद्य परिवर्तितमिव जगदालोकयामि । नूनं कस्मिन्श्चिदपरिचित एव देशे समापतितोऽस्मि, सर्वमेवालक्षितपूर्वमिदं दृश्यम् । तथाहिः—

इतः श्रेणीवद्धा यतपरिकरा यान्ति मनुजा
इतोभेरीनादो गगनपतियातुं प्रचलति ।
जनानां सम्मर्दो भ्रमति च सशस्त्रः प्रतिपदम्
महत्याः सेनायाः शिविरमिव पश्यामि नगरीम् ॥

काचिन्महती विपत्सन्निहितेति जनानां मुखरवधारयामि । शत्रुणा कदाचिदस्माकं देशः समाक्रान्तुमभिलषित स्तमेव प्रतिफल मनुभावयितु मेते नरकेसरिणो महान्तं समरसम्भार माचिन्वन्ति । अहो-वीरश्रियाविलसितम् ।

इतः क्षात्रोधर्मो विधृतनररूपः प्रसरति
इतः स्त्रीणामोघस्त्यजति च सुतान्मुक्तकरुणः
जगज्जेतुं सर्वं कृतमति रिवायं खलु जनः
समन्तात्सम्भूय व्रजति जयनादंच कुरुते ॥

तद्यावत्कमप्यनुयुज्य निर्धारयामि ( परिक्रम्य विलोक्यच )हन्त-मे प्रिय वयस्योयमित एवैति । तद्यावदेनम्पृच्छामि । वयस्य नमस्ते चिराद्दृश्यसे ।

द्वितीयः—भद्र नमस्ते त्वमेवनून मसूर्यम्पश्योऽसि संवृत्तः।

प्रथमः—तदास्तांतावत् कथय मे किन्निमित्तकोऽयमद्‌यवीरोत्सवोदृश्यते।

द्वितीयः—सत्यंत्वमसूर्यम्पश्य एवासि संजातः। किमाप्राकृत प्रसिद्ध मिदमपि प्रष्टव्यन्नाम।

प्रथमः—त्वंतावन्न कथयिष्यसि, अहं कञ्चिदन्यं प्रक्ष्यामि ( इति चलति )

द्वितीयः— भद्र मा कुप्य। एष कथयामि ते भूतार्थम्। जानासि यत्पूर्वेद्यु रत्र म्लेच्छभृत्यो मानसिंहो महाराजं द्रष्टुं समागत इति।

प्रथमः—आम् आम् तत्र भवता महाराजेन च स म्लेच्छवदपमानितः

द्वितीयः—सएवाधुना दिल्लीमुपेत्य यवनराजस्य चिराद्धूमायितरोषानलं निजापमानार्चिषा सन्दीपयिष्यतीतितदर्थमेवायं समरसमारम्भः।

प्रथमः-सखे यवनराजो मेवाडदेश माक्रमिष्यतीति सर्वथाऽसम्भवं सम्भावयामि यतः।

नक्तन्दिनं जयमत्तप्रमुखाहतस्य
सन्दर्शनेन वपुषः स्मृतिमभ्युपेताः
चित्तौरदुर्गसमरस्य कथा प्रसंगा
अद्यापि तस्य हृदयं परिकम्पयन्ति ॥

द्वितीयः— तथापि न स आत्मानं परैः पराभूयमानमालोक्य वाचंयम इव निभृतं स्थास्यति। यतः

पद्भ्या माहत्य राज्ञामतिनतशिरसामासमुद्रं किरीटम् ।
कृत्वा बद्धाञ्जलीन्स्तान्नहमहमिकया धावतो वन्दनाय ॥
नाम्नैवो सार्वभीत्या रिपुयुवतिदृशां कज्जलं दृग्जलेन ।
मेवाडाधीशगर्वं नृपति रकवर स्तं कथंसोढुमीष्टे ॥

प्रथमः—इत्थं चेत्समेधतान्नाम तस्य रोषानलो नहि वयं पतङ्गा यदस्माकं सुकरमेवदहनमिति ।

द्वितीयः—आम सखे निजितसकलराजचक्रोपि स त्रिभुवन वीरललामभूतमार्यजातेरभिमानमूर्तिमिव हिन्दूपतिं प्रतिपत्तिरणमालोक्य नूनं स्वप्नेष्वपि न विश्रान्ति मधिगच्छति ।

प्रथमः-तथापि ब्रूहि कियदस्माकं सैन्य बलं संजात मिति ।

द्वितीयः-प्रायशः द्वाविंशतिसहस्रं मनुष्याः समुत्साहसुधाप्लावितहृदयाः शस्त्रपाणयो धर्मरक्षायै समुत्थिता इति श्रूयते । शतशः पर्वतीयाः भिल्ला अपि पर्वतोपत्यकासु गृहीतशरासना अवसरं प्रतिपालयन्तस्तिष्ठन्ति । ( सखेदम् ) परं सखे ! स्वल्पा वयमपरिमितान् शत्रूनवरोद्धुं शक्ष्यामोनवेति महान् मे संशयः ।

प्रथमः--आः ! राजपुत्रदेशोद्भवानामपि कदाचिद्विजये संशयः, राजर्षिचक्रचूडामणेः, देशानुरागपवित्रममन्त्रदीक्षितस्य प्रतापसिंहस्य प्रजासु कदाचित्म्लेच्छानामातङ्कः, सकलभुवन विदित प्रभावस्य श्री रामचन्द्रस्य चरणनञ्चरीकाणां हृदयेषु नैराश्यमिति सुनिपुणतरमालोच्यापि तमः प्रकाशयोरिवनैकत्र द्रष्टुं पारयामि ।

द्वितीयः—सखे अहमपि राजपुत्रोऽस्मि, परन्न जाने किमिति मे हृदयं मुहुर्मुहु रुपेक्ष्यमाणं किञ्च वार्य्यमाणमपिकर्णयोः समागत्य संशयमिवावेदयति।

प्रथमः—सखे! स्वल्पा अपि वयं धर्मानुरक्ता अत्याचारैकनिपुणान् स्वार्थपिहितलोचनान् मदान्धान परिमितानपि यवनान् ध्वंसयितुं प्रभवामः।
पश्य समरेषु खलु

उद्धूतपुच्छविलसत्कटयो मृगेन्द्रा
आकेकराक्षियुगला इव राजपुत्राः।
दृष्ट्वा प्रभूतयवनानिव विश्वकद्रून्
वाचामभूमिममितं बलमाप्नुवन्ति॥

द्वितीयः—सखे अहमस्मि राजपुत्रोऽस्मि। अहमपि हिन्दूपतेरनुचरोऽस्मि। परं दोलायमानं हृदयम्प्रति किमहं कुर्य्याम्। दैवमेव तावत्पृच्छामि। हे सकललोकाधिष्ठात्रि भगवति भवितव्यते अपि नाम म्लेच्छाधिराजः—

( इत्यर्द्धोक्त एव )
( नेपथ्ये ) विजयतां )
पराजितः स्यात्।
( नेपथ्ये ) महाराजः।
आः दैवमप्यन्यथा ब्रवीति।

प्रथमः—सखे ! किमिति सम्भ्रान्तोऽसि संवृतः। न वयं दैवायत्ताः। किन्तु दैवमेव नः शस्त्रमनुवर्तते। इयं महाराजानुगता सेना कदाचिदित एवागच्छति। एहितावदावामपि वीरवेषेण सेनां प्रविशावः (ततः प्रविशति महाराजानुगतासेना)

सेना—विजयतां महाराजो विजयतां महाराजः।

राजा—भो भो मेवाडाऽधिवासिनः पौराः नेदं कस्याप्यनवगतं यदचिरेणैव प्रलयघनकरालाः म्लेच्छहतकानामनीकिन्यो न केवलमस्माकं स्वातन्त्र्यमपहर्तुमपि तु धर्ममपि समुन्मूलयितुं समापतिष्यन्ति। समागत्य च गवां शोणितेन धर्ममन्दिराणि कलङ्कयिष्यन्ति, अत्याहितैश्च कुलवधूनां सतीत्वमपहरिष्यन्ति। तदयमेव युष्माकं परीक्षावसरः।

सर्वे—महाराज ! सखड्गाः समुद्यताःस्म। नास्मासु सत्सु शत्रवो धर्ममवधीरयितुमीशाः।

राजा—यस्याः कृते हम्मीर संग्रामसिंहादिभिर्वीरवरैर्नक्तन्दिनं घोरं तपस्तप्तम्। यस्याः कृते सहस्रैरस्माकं पितृभिः स्वशोणितैर्नद्यः प्रवाहिताः। यस्याः कृते सुकुमारै राजकुमारै रमिताभिश्चाबलाभिर्निजप्राणास्तृणवत् समुज्झिताः सैव स्वर्गादपि गरीयसी मातृभूरद्यापि पाशैर्निगडयितुमागच्छन्तं शत्रुमालोक्य कातरिता सतीसाशमस्मानालोकते। तच्चेदस्ति युष्मद्दोर्दण्डेबलं तत्सान्त्वनीयेय मरिणां रुधिरासारैः।

सर्वे–महाराज ! अचिरादिदमेव विधास्यामः ।

हे हे मानधनाः हिमाद्रिशिखरैरुत्थायदीर्घाम्बरे
चित्तौरस्य च केतुभिर्विलुलितै दुर्गोपकण्ठस्थितैः ।
किंवा नस्तपनान्वयस्य गुरुणा प्रद्योतनेन स्वयम्
युष्मत्कृत्यमुदीक्ष्यते विधुरितैराशान्वितैर्लोचनैः ॥

किञ्च भगवन्तं भूतभावनं त्रातारमालोक्य स्वप्नेष्वपि न विचिन्तनीयं यद्वयं निस्सहायाः स्म इति ।

सर्वे महाराज ! त्वर्यतां यवन रुधिर पिपासवः खड्गाः नाधुना विरमन्ति ।

राजा–साधु राजपुत्राः साधु । सुवर्णाक्षरैरङ्कनीयं युष्मदीय-आक्रमद्यतनीनं विक्रममालोक्य युष्माकं सन्ततयः ल्पमभिमान भूमेर्हल्दी घाटस्ययशो गास्यन्तीति ।

ध्रुवोमेनिश्चयः । तदागम्यतां तावच्छत्रुं क्षत्रियापमानस्य विषमं फलमास्वादयामः ।

सर्वे—(सघोषम विजयतांहिन्दूपतिर्विजयतां महाराजः ।

इति निष्क्रान्ताः

( नेपथ्ये–गायन्ति )

रेरे वीरा मातुः स्तुतिकृतगीतं गायं गायं दलयतरिपुदलमेवं निहतकृपाः । जयतु च पुनरपि जननी सा याऽस्त्रं विसृजति, हृदयं व्यथयति, युष्मान्पश्यति, दीना सा तस्या जय जय सन्नादैः पटहैर्ध्व-नयितदिङ्नाभं, तस्या हृदयकृशानुं शमयत रुधिरै रणभुवि भद्राशाः यमपरिसरमुपगमयितुमरिगण मविरत मुपहत बद्धाशाः । धृतजय-माला सुरबालाः खलुवीक्षन्ते वः सुरलोके । सिञ्चित वसुधामरि रुधिरै र्जयतु च पुनरपि जननी सा ।

## तृतीयो गर्भाङ्कः

( नेपथ्ये महान्कलकलः ( मानसिंहो वीर वेषेण प्रविश्य कल-कल माकर्णयन् )

मानः—अहह भीषणेयं रणचण्डी

प्रलयघन करालानीकनीसंकुलायाम्
स्तनित सम शतघ्नी शब्द संकम्पितायाम्
बहलसलिलतुल्यैः शोणितै रार्द्रितायाम्
विलसति रणचण्डीनर्तनं संगरोर्व्याम् ।

ध्रुवं रिपुघस्मरेण प्रतापसिंहेन प्रविश्य व्यूह मुपक्रान्तं किमपि समरनैपुण्यम् । तद्यावदहमपि समरभुवमवतरामि ( अग्रतो-विलोक्य ) आः अवधीरितक्षात्रधर्माः, क्षुद्रहृदयाः, विस्मृत सर्वो-पकाराः कृतघ्नाः, यवन सैनिकाः क पलायध्वम् ।

( प्रविश्य भयभीतः सैनिकः )

सैनिकः—सेनापते ! सकलमपि कुलमाकुलीभूतम् । सत्वरमुपसरतु भवान् ।

मानः—मुहम्मदसिंह विशदं ब्रूहि किमापतितम् ।

मुहम्मदः—शृणोतु देवः । हल्दीघाट द्वारं प्रविशत्सु युष्मद्बलेषु, कुटिल भृकुटीभंगभीषणेन, प्रभाभासुरकरवालकरालेन, वायुवेगाभिभा-विनं द्वितीयमिवेन्द्रायुधमारूढेन, अनुचरानुगतेन स्वयं भगवता का लेनेव, अमितशार्दूलानुगतेन सैनिकानुगतेन च प्रतापेन केसरिणेव, अगणित शिलीमुखासारै रभियुक्त स्तेषां दक्षिणोभागः ।

मानः—ततस्ततः ।

मुहम्मदः—ततोदेव स्खलितसकलतारागणनिपातेनेव रिपुनिकरापतनेन महाप्रलयजलधिजलमिव समचलन्निखिल मपि यवन बलम् ।

मान—ततस्ततः

मुह—ततोदेव अन्योन्यसंवद्दसमुन्मिषच्छस्त्रप्रहारध्वानप्रति ध्वनिता इवाभूवन्दश दिशः । "जय हिन्दूपते अल्ला हो अकबरेति कोलाहलमयमिवान्तरिक्षम्, पताकामयमिव गगनमण्डलम, गजमदमय इव समीरणः, प्रलयजलदगम्भीर दुन्दुभिभीमनादजनितोत्साहमयानीव मनांसि, मदोन्मत्तजनमयमिव रणक्षेत्र मलक्ष्यत ।

मान—ततस्ततः

मुह—ततोदेव करितुरगपदातिपदोद्धूत धूसरधूलिपटलैः पिहितमिव गगनमण्डलम् । अन्धीकृताश्चसकला दिशः ।

मानः—ततस्ततः

मुह——ततोदेव रेणुस्थगितं यवन वल मालोक्य अध्युषित गिरिशिखरै रवसरं प्रतिपालयद्भि र्भिल्लै रगणित वाणप्रहारै रमितग्रावानिपातै रभियुक्तोऽस्माकं प्राच्यभागः । ततश्च सम्भ्रान्ताः सैनिका अपक्रान्ताः

मान—हाधिक् अपक्रान्ता स्ततस्ततः

मुह— ततो देव म्रियमाणाना माक्रन्दनेन, शतघ्नीदह्यमानाना मार्तनादेन, करितुरगपदातिपदमृद्यमानानां विलापेन, वाजिनां हेषारवेण, करिणां चीत्कारेण, किङ्किणीनां क्वणितेन, ग्रैवेयघन्टानांटङ्

तेन, प्रयाण पटहानाँ निनादेन, बधिरी कृताः सर्वेपिदिग्विभागाः । देव सर्वथा इदमेव विचित्रं यत् कथं न विघटितसकलनक्ष-त्रेण सहस्रधा भिन्न मन्तरिक्षेण ।

मान—ततस्ततः ।

मुह—ततोदेव शतशतशतघ्नी समुद्भूतधूमेन द्विगुणीकृतेऽन्ध-कारे त्रिभुवनमपि दग्धुमभिलषमाणैः शतघ्नीगोलकै रास्थ-गिते गगनमण्डले, रिपुतिमिरमुदस्यापतन्तमिव मरीचिमालिनम्, धृतपुरुषरूपं शौर्यमिव, करवालचालनचटुलकरतलम्, क्वाऽसि, रे म्लेच्छहतक २" इत्यनेन प्रलयजलधरस्तनितेनेव गम्भीरशब्देन दिवमाघोषयन्तं प्रतापं वायुवेगेन युवराज मभिगच्छन्त मालोक्य सर्वे पिसुभटा कान्दिशीका अभूवन्

मान—हाहन्त ।

( नैपथ्ये ) रेरेम्लेच्छाधिराज शिशो, अन्तः पुरेमातुरुत्सङ्गं परि हीय क्रीड़ाकौतुकेन गजमारुह्य समरभुवमवतीर्णोऽसि तत्सत्वरं पलायस्व शिशुरितिकृत्वो पेक्ष्यसे ।

मान—आः अभिमानिना प्रतापेन कुमार एवं भर्त्स्यते । कुमार कुमार नभेतव्यंनभेतव्यंम् । अयमहमागच्छामि । ( परितोविलोक्य ) हाहन्त प्रभूततरेषुयवनेषु पलायमानेषु कुमारोपिदृश्यते ।

मुह—देव सकलमपिबलमाकुलीभूतमित्यवकल्पयामि ।

मान—त्वमपिस्वस्थान मशून्यं कुरु ।

( इतिनिष्क्रान्तौ )

( ततो मूर्छितं कुमार मुपगृह्य हस्तिपकः प्रविश्य )

आः प्रतापावलोकन विलुप्त संज्ञोऽयं सुकुमारः कुमारो ऽद्यापि न समाश्वसिति। हाधिक्किंकुर्याम्।

( नैपथ्ये महाकलकलः )

कुमारः—( उत्थायकलकलमाकर्णयन् ) हा ध्रुवंप्रतापेन स्वनितो विजयदुन्दुभिः

( प्रविश्य )

पुरुषः—देव नैवम्। शृणोतु कुमारः। गाढ़प्रहार हत निहत निखिलकायः अकृतव्रणबन्धः शोणित शोणशरीरो ऽसहायः प्रतापोऽस्माभिर्निगृहीत प्राय एवाभूत्

कुमारः—हन्त ! ततस्ततः।

पुरुषः—परं तादृशं तमालोक्य वीरवरो मन्नाजी विद्यु दिव सकल मरिनिकर मुल्लङ्घ्य तत्सकाशमुपागतः। तेन च स्वामिभक्तेन भृशम भ्यथितः प्रतापः कथं कथमपि राज चिन्हानि तस्मै विसृज्य सैनिकैरज्ञात एव समरादपागतः। सर्वेपि बला समुद्रोत्तुङ्गतरंगायमाणा स्तमेव प्रतापम्मन्यमानाः प्रहारमकुर्वन्।

कुमारः—अहालोकोत्तरा स्वामिभक्ती राज पुत्राणाम्।

पुरुषः—

स स्वामिने तृणवदुज्झितु गात्मदेह<br>
कृत्वा मतिं यम इवाति कराल रूपः<br>
कादम्बिनी मिव भटालिमुदापतन्तीम्<br>
तीक्ष्णैः शरै रवि रिवांशुभि रभ्ययुंक्त ॥

परं स तिमिंगलशतोत्तरिङ्गताम्बुधौ नौरिव चिरंस्थातु मशकत्। क्षतजसंवलित देहोऽप्या प्राणधारण ह्यायुधमहासीत्।

तस्मिन्नेव निपतिते द्विगुणित साहसाः सैनिका भेरीनादैर्गगन-मपि कम्पयन्ति।

( नैपथ्ये विजयतां कुमारो विजयतां सेनापति रितिमहान्शब्दः )

मानः—( प्रविश्य ) कुमार विजय श्रिया वृतोऽसि। प्रताप विजयिन मात्मानं खलु त्रिभुवन विजयिनं मन्यस्व।

कुमारः—सेनापते यवन राजस्य विधिरेवात्र प्रशस्यो नाहम्।

मान—तदेहि विजयोत्सवं मानयामः।

( इतिनिष्क्रांता )

---

# चतुर्थोगर्भाङ्कः ।

(पृथिव्यां लुठितो मरणासन्नश्चेतकः पार्श्वे एव च शोणितशोण-वसनः स्थितः प्रतापः)

प्रतापः—हा अतिकृच्छ्राद्रक्षितोऽस्मि आभ्यांयवन हतकाभ्याम्। (नैपथ्ये)

अयेनोलाश्वारोहिन् २ तिष्ठमुहूर्तं तिष्ठ।

[ नैपथ्यम्प्रतिवीक्ष्य ]

प्रतापः—( विलोक्य ) कोऽयमन्यो माभभिलक्ष्य समायाति ( विलोक्यसक्रोधम् ) आः ज्ञातम् ममैवायमनुजहतकः। मामधुनानिराश्रयं पीडितमालोक्य विद्वेषाग्निनाभिभूतोऽवसरं लब्ध्वा प्रतिविधातुं समायाति।

मामालोक्यरणेत्रणैरभिद्रुतं संहर्तुं मायासि किम्
दत्वा मां यवनाय वा बहुपुरस्काराभिलुब्धोसि किम्
एहित्वां प्रतिपालयामि चिरतो विश्रब्धमायुध्यताम्
अद्यापि प्रधनाद्विभेति नितरान्नायम्प्रतापो नृपः।

[ इत्युक्त्वा सज्जोभवति ]

शक्तिसिंहः—[ प्रविश्य सानुशयम् ] नाथ नाथ प्रतिसंहर निज रोषम् नाहंकुलाङ्गार इदानी मनार्यं माचरितु मुपपन्नोऽस्मि।

( सविनयम् )

स्मृत्वा योऽहं चरितदुरितं सर्वथाऽन्तर्ज्वलामि
तम्मांभूयो व्यथयसि कुत स्तादृशैर्वाक्प्रहारैः।

प्रायश्चित्तं चरितुमधुनात्वां प्रपन्नोस्मि तात !
हित्वा रोषं चरणपतितः क्षम्यता मेषपापः।

( इति चरणयोः पतति )

राजा—उत्तिष्ठोत्तिष्ठ प्रियवयस्य ! चिराद्दृष्टोसि। परिष्वजस्व-मेऽङ्गानि। ( इति परिष्वजति ) अहा ! नूनं विस्मृत दुःखोऽस्मि संवृत्तः।

व्रणातिगच्छद्रुधिरा वलिप्त-
देहव्यथां मे सहसाऽपहृत्य।
प्रेमाश्रुभिस्ते हृदये वितीर्ण
स्तापापहश्चन्दनलेप एव ॥

शक्तिसिंहः—तात अहमपि विस्मृत दुःखोस्मि संवृत्तः।

चिन्ताशिखाभिर्दहतिस्म पश्चा-
त्तापाग्निरन्तर्हृदये मदीये
सुधाऽति शीतैः परमद्य सोऽयम्
प्रेमाश्रुभिः संशमितस्त्वदीयैः ॥

राजा—प्रियवयस्य ! कथमिह समागतोसीति श्रोतु मिच्छामि।

शक्तः—समन्तादमित प्रहार शिथलित देहोभवान्यदा लोकैकवीरायझालापतये स्वशिरच्छत्रं प्रदाय परितः समुद्रवीचीभ्यइव उद्वेल्लद्भ्यो मुगलानीकनीभ्य अपक्रान्तु मुपक्रान्त स्तस्मिन्नेवसमये हन्तुकामाभ्यां द्वाभ्यां यवनहतकाभ्या मनुगतो भवान्मम नेत्रमार्ग मवतीर्णः।

नाथ !

कारुण्य पूर्णदशया भवतां तदानीं
वज्रातिशायि हृदयं द्रवितं मदीयम्
मोहान्धकार मपसार्य च कापि पुण्या
स्नेह प्रभाविरभवद्धृदये मदीये।

भ्रातृ वात्सल्येन कर्णयो राकृष्टइव सेनातो निष्क्रम्य तावेव यवनौहन्तुमनुवर्तमानोऽहं सुदूरमागतः। इहागत्य च यावदेव ताभ्यां गृहीत प्रायंत्वामालोक्य द्विगुणित वेगोऽभवम् तावदेव ते प्रियचेतकमेकेनैवोत्प्लवेन उत्क्रान्तसरितमपश्यम्। ततश्च भुशुण्डीप्रहारेण............।

प्रतापः—( सावेशम ) हा चेतक चेतक। मया कृतघ्नेन अस्मिन्क्षणे त्वमपि विस्मृतोऽसि ( सहसा तमुपसर्प्य तस्य मुखमंके निधाय च ) हा सखे मामपि हातु मिच्छसि।

प्राणानां मम रक्षक स्त्वमधुना हित्वा कथं यासिमा—
मेकस्त्वं सुखदुःखयोः सहचरो मे वर्तसे चेतक ?
एति त्वामनु वर्तितुं सुहृदयं मित्रक्षणं स्थीयताम्
संसारे न जिजीविषामि भवता शून्येऽधुनाबन्धुना॥

( मुखमुन्नमय्य ) हा किम्मृतः। हा किमिदमापतितम्। हा मुषितोस्मि। हा लुण्ठितोस्मि। हा देवि वसुमति अपगत रत्नासि संवृत्ता। हा लोकाःशून्या स्थ। हा सुरपुर निवासिनो देवाः पूर्णा वो मनोरथा अपहतं युष्माभिर्मेरत्नम् सखे प्रीतक्षस्व माम्। अहमपि त्वामेवानुर्तिष्ये। हा प्रतिवचन मपिनप्रयच्छसि क्व ते पुरातनः स्नेहः।

शक्तिः—तात किमित्यधीरोभवसि । नहि भवादृशैर्निराशैर्भवितव्यम् गृह्यताम्मदीयोऽयमश्वः । अहमस्य यवनस्य धौरेयमारुह्य एव शिविरम्प्रति निवर्तिष्ये यथा न मयि युवराजः संजातसन्देह संजायेत ।

प्रतापः—( निश्वस्य ) प्रियबन्धो यदि कदाचिन्मम दिनानि परिवर्तिष्यन्ते तदाहमस्यप्रिय चेतकस्य तादृशं स्मृति चिन्ह स्थापयिष्यामि । यथा आकल्पमेवलोका अस्य गुणान्गास्यन्ति । अचिरादेव शिविरं प्रयाहि "शिवास्ते पन्थानः"

शक्ति—तात शीघ्रमेव भवच्चरण कमल मुपसर्पिष्यामि । नमस्ते !

( इति-निष्क्रान्तौ )

---

# ॥ गवां पालनम् ॥

विषयात् प्राक् इदमत्र विचारणीयम् यत् कदास्माकं पशुभिः सह सम्बन्धोऽभूत्। येऽस्माभिः ग्राम्यपशवः इत्यभिधीयन्ते किन्ते स्वभावादेव ग्राम्या आसन् उत बलादस्माभिर्ग्रामेष्वानीताः।

सर्गारम्भे पूर्वं वनस्पतयः संजाता स्ततः पशवः ततो मनुष्याः। तस्मिन् काले जनानामतीव स्वल्पत्वात् ते स्वकीयमुदरपूरणं कन्दमूल फलादिभिरेव कुर्वन्ति स्म। परं यथा २ जनाः समवर्द्धन्त तथा २ भोजनकाठिन्यमप्युपस्थितम् तस्मिन् काले कैश्चिन्मांसमेव भोजनत्वे नाङ्गीकृतं यथाद्यावधिरपि मांसोपजीविनः भिल्लादय उपलभ्यन्ते। वहवो दयालवोऽप्यासन् तैः पशुपालनमारब्धम्।

तेषांश्च दुग्धं पपुः, तेषां रोमभ्य और्णवस्त्राणि निर्ममुः, वृषैः कृषिंचक्रुः। परं तस्मिन् समये नहि फलानां नितान्तमभाव आसीत्तच्चातस्तेषां कृषिरेव आधारभूता समजायत किन्तु तेषामुदरपूरणं फलादिभिरन्नेन च भवतिस्म। एवं पशुभ्यः स्वल्पमेवासीत् कार्यं अतस्ते वहुकालं स्वेच्छया वनेषु हरिततृणाशनेन सानन्दं वभ्रमुः।

परमद्यत्वे नहि पशुभ्यः समीचीनान्युपलभ्यन्ते तृणस्थानानि, तेभ्य अधिको लाभो गृह्यते नच तदनुरूपं भोजनं दीयते। इदमेव कारणं यत् तारुण्य एव ग्राम्याः पशवः पञ्चत्वमाप्नुवन्ति। एवमद्यत्वे नितरां हीना प्राणिनां दशा।

सुदूरं किल नीताः खेदकरेण प्रसंगान्तरेण, सम्प्रति विषयमनुसरामः।

पशुषु वयं गोभिरतितरां सम्बद्धाः। तत् गवाँ पालने ये विषयाः विशेषतयावधेयास्तानेव सम्प्रति स्फुटयामि।

१. गावः समूहेषु रक्षणीयाः ॥

सर्वतः पूर्वं यः प्राण्यस्माभिः पालयितुमिष्यते तदनुकूला अवस्थाः सम्पादनीयाः। बहुभिः परीक्षणैर्निर्णीत एष सिद्धान्तः यत् पशवः संघेषु रक्षिताश्चेत्तेषामायुर्वर्द्धते। गवां जीवनकालः प्रायशो दशवर्षात्मकः, परं याः गावः संघेषु न रक्ष्यन्ते, अति प्रेम्णा पर्याप्तभोजनेन चापि संरक्षिता पञ्चषवर्षानन्तरं म्रियन्ते। अतस्ताः समूहेषु रक्षणीया श्चारणीयाश्च यथा तासां दीर्घायुः स्यात्।

२. ताः प्रतिदिनं व्यायामार्थं वनेषु त्रिचतुर्घण्टा यावच्चारणीयाः।

वन्याः पशवः सर्वदैवेतस्ततो भ्रमन्ति, तेषां स्वभावानुकूलमेव भ्रमणम्। ग्राम्याः पशवोऽपि पूर्वमारण्या एवासन् अतस्तेषामप्यनुकूलमेव भ्रमणं। ग्राम्याः पशवः बन्धनविनिर्मुक्ताः स्वच्छन्दमितस्ततो भ्रमन्तः महदानन्दमनुभवन्ति। किञ्च ग्रामेषु दुर्गन्धितं पवनं भवति अस्वास्थ्यकारि रोगजनकं च, पशूनां निवासस्थानान्यपि नितरां मलिनानि भवन्ति तानि विषमयं जनयन्ति परिणाममिति तदपनयनायावश्यकं तेषां वनेषु चारणम्।

अन्यच्च न खल्वस्माकमविदितमिदं यन्नहि व्यायामादृते नराणामपि भोजनं समीचीनतया परिपाकमेति ये किल पक्वमन्नं भुञ्जते, ये पुनस्तृणादिकमपक्वमेव भुञ्जते तेभ्योऽतितरां तीक्ष्णजाठरमावश्यकमन्यथा नान्नपरिपाकः सम्यक्तया सम्भवति। साधारणतया पञ्चविंशतिवर्षमायुः परिमितं गवां, परं नहि सम्प्रति तदायुर्गावामवलोक्यते, अत्र स्वास्थ्यारक्षणमेव कारणम्।

३ गवां भोजनं।

न चेदस्मदीयं किमपि समीहितं सिद्ध्येत, तर्हि गावोऽपि न पालयेरन्नाम। यत अस्माकं कश्चिल्लाभः; अतएवास्माभिः गावः पाल्यन्ते। तृणादिना गवामेतावदेव दुग्धमुत्पद्यते यावत् तद्वत्सायालं स्यात् परमस्माभिस्तासां दुग्धमपि गृह्यत इति तत्परिवर्त्तने

किमपि विशेषं भोजनं नास्माभिर्दीयते चेत्तर्हि न खलुन्याय्यमिदं। अन्यच्च नैतावदेव केवलम्। परं केचित्तु विशेषेणैव प्रकारेण दुग्धं दुहन्ति, (यद्भाषायां फूकाशब्देन व्यवह्रियते) येनाधिकं दुग्धं लभ्यते, परं किंचित् कालान्तरं महतीहानिः सम्भवति, नैवंप्रकारेण दुग्धदोहाः गावः गर्भधारणं क्षमन्ते, इष्टप्राप्तावनिष्टापत्तिर्भवति भ्रूणहत्या चापतति। परं यदि ताभ्यः दुग्धं ग्राह्यमथ च न्यायेन ग्राह्यं तर्हीदृशं भोजनं ताभ्यः प्रदेयं येन समधिकमुत्पद्येत दुग्धम्। तदिदानीं दुग्धस्याधिकोत्पत्तये ये पदार्थाः भक्ष्यत्वेन विहितास्तान्निर्दिशामः।

१-ताभ्यः भोजनं प्रकृत्यनुरूपं प्रदेयम्। २-गोर्देहंदुग्धमात्रां च संलक्ष्य भोजनमात्रानिश्चेतव्या। ३-वृषभ्यस्तदपेक्षया द्विगुणं भोजनं देयम्। ४-दोहनात्पूर्वं ताभ्यः स्वल्पं भोजनमवश्यं प्रदेयमन्यथा गवामूधस्सु समाघातो भवति येन तानि विदीर्य्यन्ते !

उदाहरणार्थं-याः गावः अष्टप्रस्थमितं दुग्धं प्रददति ताभ्यः अधोलिखितानि नियतपरिमाणानि भोजनानि विहितानिः—

| | भोजनम् | | तत्परिमाणम् |
|---|---|---|---|
| १ | धान्याः गोधूमयवादयः | …… | एक प्रस्थमितम् (१ सेर) |
| २ | तुषः गोधूमयवचणकादीनाम् | …… | तथैव |
| ३ | खलिः तिलसर्षपादीनाम् | …… | तथैव |
| ४ | कार्पासबीजानि | …… | " |
| ५ | बुसम्, | …………………… | प्रस्थद्वयमितम् |

६ शष्पम्, दूर्वादयः........................ द्वादशप्रस्थमितम्
७ लवणम्,...... एक टङ्क ( छटांक ) मितम्
८ गन्धकः, ( शोधितः )......एकटंकस्य चतुर्थांशः

ये पदार्थाः उपरि निर्दिष्टास्तेषु दूर्वा ( दूब इति भाषायाम् ) मुख्यतमा। सा च सर्वत्रापि समुपलभ्यते। अभिनवा दूर्वा समधिकं दुग्धं जनयति। परं यदा नूतना नोपलभ्यते दूर्वा तदान्ये सर्वे पदार्थाः भोज्यत्वेन निर्दिष्टाः। ज्येष्ठाषाढमासयोर्यदा हरिततृणं दुर्लभं, तत्स्थाने गोभ्यो बुसं प्रदेयम्।

दूर्वा दुग्धस्य मात्रां परिवर्द्धयति, गुणयति च तच्छुभ्रतां स्निग्धताञ्च। अद्यत्वे न वनेषु दूर्वा सुलभा, गृहे च गोस्वामिन क्षुधानिवृत्त्यर्थं बुसमपि प्रदातुं न क्षमन्ते, अतो गाव इषीकादितृणमेव चरन्ति। परमिषीकादौ पोषकपदार्थस्य रसस्य चाभावः। इषीकादितृणमन्येषाँ पदार्थानामार्द्रतामाकर्षयति। एवं च दुग्धं शष्यति। अतः सर्वे भोज्यपदार्थाः सम्यक्तयार्द्रीकृत्यदातव्याः।

धान्याः—गोधूमयवादयो धान्याः गवा पोषणाय दुग्धाय चात्यन्तमुपकारिणः। परं धान्यानामशनेन पशूनां शैत्योष्मादिसहिष्णुता नश्यति, तथा च रोगाः शीघ्रमेव तानाक्रामन्ति, अतो यथा सा सहिष्णुता न नश्येत तथा प्रयतनीयम्। तच्चेत्थं भवति यत् धान्येषु ( कुलाई ) नामकं धान्यं समभागेन सम्मेल्यप्रदातव्यम्। येन शैत्योष्मणः हानिकराः प्रभावाः न स्युः। यवाश्चणकाश्च बलवर्द्धका अतो वृषेभ्य हितकराः। यदि च गौर्दुर्बला गर्भिणी च स्यात्तर्हि तस्याःधान्यभोजनं वर्द्धनीयम्। धान्यप्रदानस्यायं विधिर्यत् पूर्वं धान्याः सम्यक् संचूर्णनीयाः पुनश्च चतुर्गुणे जले क्वथनीयाः ततश्च क्व[illegible] शीते संजाते स गोभ्यः प्रदेयम्।

खलिः—खलिः दुग्धस्य नवनीतस्य चोत्पादनाय अत्यन्तमुपकारिणी। याः गावः दुग्धं ददति ताभ्यः सर्षपखलिर्न लाभावहा अपि तु तिलस्य नारिकेलस्य वा। सर्षपस्य खलिर्नितरामुष्णप्रभावं जनयतीत्यतः

गोभ्यो हानिकरा। राजिकासर्षपाभ्यां ( राई, सरसों इति भाषायाम् ) निर्मिता खलिवृषेभ्योहितकरी।

कार्पासबीजानि—कार्पासबीजानि दुग्धेस्नेहं संवर्द्धयन्ति परं प्रस्थमात्रा ( सेर ) मतिक्रम्य कदाचिदपि न देयानि, यतोऽत्युष्णतया दुष्पचतया च गवामूधांसि दहन्ति। कार्पासबीजानि खण्डशः कृत्वा जले निपात्य यावन्मृदूनि भवन्ति तावन्न प्रदेयानि।

बुसम्—अन्यपदार्थैः सह शरीरे जलमधिकं प्रविशति तस्याधिक्य निवारणाय बुसं दीयते। परं यदा दूर्वा नोपलभ्येत, तस्य स्थाने बुसमादीकृत्य प्रदेयम्।

लवणगन्धकौः—एतौ शोधकपदार्थौस्तः। अन्त्रविकारानपनयतः व्याधिहरौ च भवतः। यद्यपि नह्येतौ पदार्थौ गवां स्वाभाविकं भोजनं, परं यत अस्माभिस्ताः ग्रामेष्वानीयन्ते, यत्र सर्वथापि परिशुद्धं पवनं न भवति, अत एतौ पदार्थौ धान्ये सम्मेल्यावश्यं प्रदेयौ।

इदं किलात्यन्तमवधेयस्थानं यद्गवां मेदोवृद्धिर्न स्यादिति, अन्यथा सर्वमपि भोजनं मेदसि परिणमति। दुग्धन्तयो भवति सा गौर्वन्ध्यतामुपैति। या गर्भवती स्यात् तस्यै, तुषदूर्वामन्तरेण किमपि न प्रदेयम्।

यतः सर्वेऽप्यन्ये पदार्था उष्णप्रभावा अत एव गर्भघातकाः भवन्ति परं लवणगन्धकौ तु सर्वास्वप्यवस्थासु प्रदेयौ। नहि सर्वोप्येष व्ययो व्यर्थ एव यत एवं प्रकारेण पालिता एकापि गौः वत्सोत्पत्तिकालादारभ्य दुग्धशोषणकाल पर्य्यन्तं सहस्रद्वयप्रस्थमितं दुग्धं ददति या चोत्तमा सा ततो द्विगुणं त्रिगुणं वा दुग्धं ददाति। एवं तत्सर्वमपि भोजनं लाभायैव ननु व्यर्थं व्यत्येति॥

---

# निदाघः ।

१

मरुमरीचिकया रचितभ्रमः सुधुलनीपवनैः पवनैर्युतः ।
विकचमल्लिकया पहसन्मधुं मधुरसाधुरसातलशोषकः ॥

२

जलपतत्रिकुलंविकलीभव त्खरमरीचिकरैर्विशिखोपमैः ।
मृदुलकुञ्जकुलंसमशिश्रिय न्नवनवंवनवञ्जुलमञ्जुलम् ॥

३

शवरसूर्य्यकरैरतितापितः हिमकुरङ्गमकः परितो भ्रमन् ।
शिशिरतांश भृताभ्रधरा भृतां सुशरणं शरणंशिशिरंययौ ॥

४

श्रयति तीक्ष्णरुचि प्रथमं दिशं जगदभून्निखिलं तपनाकुलम्
नयनवार्थविकासनशालिनी कविकला विकला न बभूव सा ॥

५

मुनिवरैरवधीरितसंगमः मधुरसौकथमत्रधरातले ।
इतिविचिन्त्य भुवंखचयन्करै रविरसौ विरसो रुरुचे रुचा ॥

श्रीवत्सः ।

---

# लोक समीक्षा।

नहि शिल्पमुपेक्षणीयम्—(१)—

अस्माभिः सर्वमपि स्वकीयं प्राचीनं शिल्पमुपेक्षितम्। अन्यैश्च परोपकारिम्मन्यैर्देशैरस्माकं तदवशिष्टमपि रसातलम्प्रापितम। वहुतरामत्र कृषेवृद्धिर्दृश्यते वहुषु स्थानेषु कृषिविद्यालया अस्मदीयशासकैः संस्थापिताः। प्राचीनं शिल्पं तु नष्टमेव किं तत्र कारणमिति न तिरोहितो विषयः, नवीनमपि शिल्पं शासकवर्गेण नोद्भाव्यते। प्राचीनशिल्पस्योदाहरणं सम्प्रत्येव एकेनायस्कारेण निदर्शितम्। तेनैकाऽतितरामद्भुता भुशुण्डी (वन्दूक) निर्मिता। सा एकमिनिटात्मके समये गुलिकानाँ विंशत्यधिकंशतं प्रक्षिपति। लोहमपितस्याः आँग्लभुशुण्डीनामपेक्षया अधिकमुत्तमम्। तस्याः निर्माता इदमप्याह यदेकमिनिटात्म के समय एव एषा भुशुण्डी स्वल्पेनैव प्रयत्नेन प्रहाराणां शतद्वयं कर्त्तुं पारयिष्यति। अयमयस्कारो मैसूरदेश वास्तव्यः।

शिल्प चमत्कृतम्—(२)—

धनिनोऽपि वहुकौतूहलञ्जनयन्ति, रूस देशस्य राजधान्यामेकेन धनिना पत्राणां (कागजेतिप्रसिद्धाना) मेकः प्रासादो निर्मापितः तस्य निर्माणे सार्द्धकलक्षरूप्यकाणां व्ययोजातः। अस्मिन् गृहे सर्वमपि वस्तुजातं पत्रनिर्मितमस्ति, कुट्टिमं, भित्तयः, पटली वा सर्वमपि पत्रनिर्मितमस्ति। लोहस्य काष्ठस्य वा नामापि नास्ति। गृहनिर्माण निपुणाश्चैव माहुर्यदिदं गृहं शिलादिनिर्मितगृहापेक्षयापि चिराय स्थास्यति। तत्रत्यानि सर्वाण्यपि वस्तूनि पत्रेण निर्मास्यन्त इति तैः सम्प्रति प्रतीक्ष्यते। भारते तु तृणकुट्यर्थमपि जनाः लालायन्ते, पत्रनिर्मितगृहाणां तु कथैव का।

भारतमवनतिपरमेव—(३)—

प्रतिदिनं भारत मुन्नति प्रवणं दृश्यमानमपि नितरामधोऽधोयाति प्रथममवनतेरिदमेव प्रमाणं यत् प्रतिप्रान्तं विषूचिकादिरोगैस्तथैव जनाः म्रियन्ते । यद्यपि रोगादिशमनाय औषधालयाः प्रवर्द्धन्ते परं न तदानुगुण्येन मृत्य वोऽपि शाम्यन्ति । द्वितीयमिदं प्रबलं प्रमाणं यत् लाभकराणां कार्याणां मुपचयो भवेत् स्वल्पलाभावहानां च कार्याणामपचयः । परमत्र तु तद्विपरीतमेवविलोक्यते । उदाहरणार्थं पञ्चाम्बुप्रान्तः समालोच्यतां, तत्र देशोन्नतेर्मुख्यकारणेषु शिल्प व्यवसायादिषु प्रतिदिनमपचीयते जनसंख्या, कृष्यादिषु च तदपेक्षया स्वल्पलाभकरेषु व्यवसायेषु प्रतिदिनं वर्द्धते जनसंख्या । अष्टादशशतैकनवति (१८६१) तमाद्वर्षादेकोनविंशति शतैकतम (१६०१) वर्षपर्य्यन्तं १७३२४० शिल्पादिव्यवसायकर्त्तारः न्यूनाः संजाताः । अन्य प्रान्तेष्वप्येवमेवानुमन्यताम् । कृषीवलाः गृहसेवकादयश्च नितरां वृद्धाः सञ्जाताः । काष्ठवाहकाः प्रतिशतकं १२१०२ गोपलाः ६४ अजाविपालाः १२४३ महिषपालाः १०४ समवर्द्धन्त । एवं भृत्याः दासाश्च २८७६३६ अधिकाः सञ्जाताः । अर्थात् दासत्वमेव वर्द्धमानंदृश्यते । एवमन्यप्रान्तेष्वपि अनुमातुं शक्यते । अथ च शिल्पादिव्यवसायं प्रति पुरुषाः न्यूनाः सञ्जाताः । वस्त्रनिर्माणे लक्षद्वयं चर्मकार्ये लक्षसपादद्वयं न्यूनाः संजाताः । धातूनां कार्य्ये प्रतिशतं ४८, भुशुण्ड्यादिनिर्माणे ८७, शर्करानिर्माणे ३६६ पुरुषाः न्यूनाः संजाताः । नैतावदेव अपरमपि । एवं किल शासकवर्गः समाख्यापयति यत् पञ्चाम्बुप्रान्तः सर्वप्रान्तेभ्यो धनिकतरः, तत्रापि कियद्धनमित्यपि समालोच्यताम् । पञ्चाम्बुदेशस्य १४१८-७७५० वासिषु केवलं विंशतिसहस्रा एवैतादृशाः सन्ति ये नाममात्रेण धनिनो वक्तुं शक्यन्ते । अनेनैव सर्वस्य भारतस्य दशानुमातव्या ।

अपरं सर्वेषु देशेषु प्रतिमनुष्यं धनप्राप्तिर्वर्द्धते परं भारते सा हीयते । पूर्वं भारते प्रतिदिनं प्रतिमनुष्यस्य संविभागे ताम्रक (पैसा) त्रयं गण्यते स यदा आंग्लदेशे प्रतिमनुष्यं ताम्रकाणां सार्द्धैकशत-

क ( १५० ) मासीत्, परमिदानी तस्य ताम्रकत्रयस्य स्थाने सार्द्ध द्वयताम्रक (२½) मवशिष्टं

अस्मदीयः शासकवर्गः सावलेपमित्थमाचष्टे यदस्माभिर्भारते शिक्षा प्रचारिता, किन्तस्या अयमेव दारुणः दारुणःपरिणामः। सप्त वर्षेषु महदत्र वहिष्कारान्दोलनं प्रचलितं किन्तस्यायमेव विपाकः। अस्यायमेव हेतुर्यदत्र विज्ञान कलादि प्रयोगेण वस्तूनि न निर्मीयन्ते। पूर्वं यदान्येषु देशेषु नासीत् कलाकौशलं तदा तेऽस्माकं करनिर्मितानि वस्तनि क्रीणन्तिस्म। परमधुना तैःकलादि प्रयोगेणाल्पमूल्यं सुन्दरं प्रभूतञ्च वस्तु निर्मीयते। अतोस्माक बहुमूल्यमपि वस्तु केनापि न गृह्यते। अतः प्रतिव्यवसायं न्यूनायते जनसंख्या।

भारत वासिभिर्भा रतीयैर्भाव्यम्—

संस्कृतवाणी भारतीयैरेवाधिकं सम्बध्यते' अस्मदीयं पुरातनं यशो धर्म इतिहासश्च देववाण्यामेव समुपलभ्यते। महान्ति रत्नानि यान्यस्माभिरेवालोड्याधिगन्तव्यानि, तेषां संस्कृतसाहित्योपगूहितानां वयमेवाधिकारिणः। परं महानयं शोकावसरो यदस्माभिर्नात्र घषये समवधीयते भारते यवनाः हिन्दुभ्यः स्वल्पसंख्याका एव परन्तथापि तेषामारव्य पारसीक ( अरबी, फ़ारसी ) भाषयो र्विद्यालया अध्येतारश्च संस्कृतविद्यालये भ्योऽधिकतराः। दशोत्तरैकोनविंशतितमे वर्षे ( १९१० ) भारते १४७० विद्यापीठा आरब्य पारसीक भाषायो रासन्, येषु ३१३४६ विद्यार्थिंन अधियन्तिस्म। परं संस्कृतस्य १२९८ विद्यापीठा आसन्, तेषु २०६१० विद्यार्थिनः विद्यामधिजग्मुः। एव म्प्रतीयते यद्भरातीयाः, केवलन्नाम्नैव भारतीयाः सन्ति। वस्तुतस्ते आंग्लदेशीयाः, पारसीकाः, आरव्यदेशीया वा सन्ति परं तत्रापि न पूर्णाः। भारतीयानां भाषाः कार्य्याणि विचाराः दासत्वस्यकुल भवनानि सन्ति।

---

# उषाया नियमाः *

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते-किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोप्यधिको यदस्यां धार्मिका गुरुकुल विषय काश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति। येन मनागपि संस्कृतमवबुध्यमानानामर्थावबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।=) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याङ्कस्य मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं गृहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्या मभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्र ग्राहकसंख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्य्यये यद्यस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः। अयुक्तानि विज्ञपनानि न जातु स्वीकरिष्यन्ते।

प्रबन्धकर्त्ता
"उषा"
गुरुकुल कांगड़ी
डा० शामपुर

Registered Number A. 639.

* ओ३म् *

# उषा

( संस्कृतमासिकपत्रिका )

उषा अजीगर्भुवनानि विश्वा । ऋग्वेदे ।

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः ।
विगलतु जनतान्धकारलेशः, प्रसरतु देवगिरामुषाविशेषः ॥

| विषयसूची | पृष्ठाङ्कः | विषयसूची | पृष्ठाङ्कः |
|---|---|---|---|
|  |

# 'निवेदनम्'

अयि अनुग्राहकाः ग्राहकाः

उषेयंचिरादुदितेति भवतामुन्मस्कानां हृदयकमलानि म्लानान्येवजातानीति वयमप्यवकल्पयामः तदर्थं च सविनयं क्षमां याचामहे नायंसर्वथाऽस्माकमेव दोषः यदिकदाचिन्मेघाच्छन्नस्य दिनपतेरुषा नोदेति स किं सूर्यस्यदोषः एवमेव गुरुकुलोत्सवस्य, कुम्भपर्वणः, प्रधानतश्च यन्त्रालयस्य दुर्निवारैः प्रत्यूहै रभिभूतेयं उषा चिरादुदयमिता नास्माकं दोषमावेदयति इदानीं मुभावप्यङ्कौ सहैव भवतां करकमलावुपसर्पतः पुरस्तादियं उषा नियतमुन्नतिपथमारोहयतीति निश्चाययामो वयं भवतः ।

---

* ओ३म् *

# उषा

| द्वितीये वर्षे | * * चैत्र-वैशाखौ * *<br>सं० १९७२ वि० | चतुर्थं पञ्च<br>पञ्चमोऽङ्कः |
|---|---|---|

## प्रबोधनम् ।

सज्जन जन चिन्तय महेशं सदा
वेदवचांसि विचारय नित्यं ॥ चिन्तय—

येन विना करचरणावयवैः
विश्वं कृतं वेधसा ॥ सज्जन—

निर्विकारमजमेकमनादिं
ध्येयं हि ब्रह्म त्वया ॥ सज्जन—

एकमहेश्वरवश्य मशेषं
विश्वं हि ज्ञेयं त्वया ॥ सज्जन—

माया मय मिदं मखिल मसारम्
विश्वन्तु हेयं त्वया ॥ सज्जन—

सारभूत मपरंपरशक्ति
ब्रह्मैव ध्येयं त्वया ॥ सज्जन—

मोहपाश पतितेन कदापि
धर्म्मो न हेयं स्त्वया ॥ सज्जन—

इह संसारे विषयापारे ध्यानञ्च देयं त्वया ॥ सज्जन—

# जिज्ञासा ।

नान्तः प्रज्ञं न बहिष्प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्ट मव्यवहार्यमग्राह्य मलक्षण मचिन्त्य मव्यपदेश्य मेकात्म प्रत्ययसारं प्रपञ्चोपशमं शान्तं शिव मद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ माण्डूक्योपनिषत् ।

तत्र मृत्युना नचिकेतसं प्रत्योमित्येतदित्यनेन वाक्येनोंकारस्य ब्रह्मार्थहेतुत्व मुपपाद्य "एतदालम्बनम्" "एतद्वैसत्यकाम" ओमित्यात्मानं युञ्जीत" "ओमिति ब्रह्म" "ओंकार एवेदं सर्वम्" इत्यादिभि र्वाक्यै रोंकारस्य सर्वास्पदत्वं प्रतिपादितम् । श्रूयते च श्रुतौ ओंकारेण सर्वावाक्संतृण्णेति ।

अतएवोंकारस्वरूपं माण्डूक्योप निषदि "ओमित्येतदक्षर मिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्व मोंकार एव । यच्चान्य त्रिकालातीतं तदप्योंकार एव ॥ "इत्थं भूतं सर्वगामिप्रतिनिर्दिष्टम् । समाहित चित्त स्योंकार जापसमये सर्वं ब्रह्ममयमेव प्रतिभाति न तत्रान्यदिव किमपि वस्त्वन्तरं लक्ष्यते तथाच" सर्व ह्येतद्ब्रह्मायमात्मा ब्रह्म सोयमात्मा चतुष्पात्" अर्थाज्जाग्रत्स्वप्नसुषुप्तस्थस्य बह्यन्तः घनप्रज्ञ स्यात्मन ओंकारापरपर्य्यायस्य त्रैविध्यमवधेयम् । ततश्चवास्तविकं चतुर्थमोंकार स्वरूपं "नान्तः प्रज्ञं न बहिष्प्रज्ञमिति वाक्यसन्दर्भेणोपपादितम्, तत्र प्रत्यक्षरं ध्यायता मोंकार स्वरूपं केवलं पर ब्रह्मैवानन्दमयं, सत्यस्वरूपमेकरसमवभासते सातुरीयोंकारस्यावस्था ।

सेयं तुरीयैवावस्था सर्वै र्लब्धव्या, एतदर्थ मेव महानयं पुरुषार्थः सर्वैरङ्गीकृतः । सा कथं समधि-गन्तव्येति बुभुत्सानवरतमे हृदयं मथ्नाति तत्कथमिव मोक्षस्सम्भोभवीतिति विद्वांस एवात्र शरणम् ॥ व्याख्याभिलाषुकः

बुभुत्सुः

# भारतोद्बोधनम् ।

यदवाप पूर्व मशेष देश विशेषता मसमैर्गुणैः
विततार बोधमिदं च यज्जगते ऽखिलाय तमोभुवे ॥
अशिशन्भुवं निखिलां यतश्च ज्ञानंगताः क्षिति रक्षिणः
अभवश्च यन्मुनि वर्ग साधु समाधिभिः परिभूषितम्

जनय त्यशेष जन स्मयं
स्मरणं यदीय पुराकृतम्
समुपेत मद्य दशामिमां
परलोचने प्याप तापदाम्

विलयंगता सुर भारती ।
निज राज्य मद्य धुना नते
परतन्त्रता परि भावितं
विनि शाम्यतेऽद्यतदेव हि ।

नतदैक्य मद्य विलोक्यते
न च धर्म साम्यम वाप्यते ।
प्रति पत्तनं नव भारती
प्रति पूरुषश्च नवोनृपः
अनुशासका अपितस्य साम्प्रत
मागता स्तदधीशताम् ॥

परि मर्दितुं प्रभवन्तित—
त्प्रगतन्दशा मति गर्हिताम्
न विलोक्य तावदिमांदशा—
मपितज्जहाति निजंस्मयम् ।
समयोऽस्त्ययं तव जागृते—
रवगत्य तत्प्रति बुध्यताम् ॥

---

# वैदिक धर्माश्रयणे हेतुः ।

परश्शतैर्मतै र्व्यापृतमिदं जगत् । निर्दिशति च प्रत्येकं विभिन्नमेव पन्थानम् । सन्ति च तत्तत्सत्यताप्रतिपादनपरा बहवो ग्रन्थाः । अनुसरन्ति चानेके जनाः प्रत्येकं मतम् । अस्ति च स्वमते बद्धानुरागः सर्वोऽपि जनः । सत्येवं स्वभावतः प्रश्नोऽयं समुदेति चेतसि किमिदं धर्मे निहितं वर्तते, यदा वर्जयति जनम ? अथ च धर्मे महताऽऽवर्जनहेतुना भाव्यम , योह्यसंख्येयान् जनाना वर्जयितु क्षमः स्यात् ?

अत्र ब्रूमोऽस्ति धर्मे काचिदपूर्वा शक्तिर्ययाऽऽवर्जितः सर्वो जनो धर्म मनुधावति । सा चैषा–मनुष्येणेह संसारेऽवश्यं जीवितव्यम्, परं न तत् सुशकम्, अपरिमिता विघ्ना उत्पथानिव ग्रामेयु जनान् संसृत्यटव्याम् । धर्मो हि जीवनमार्गं "एतदनुगम्यमान मभ्युदयकारि भवति" इति दर्शयति । अभ्युदयाकाङ्क्षी च सर्वो लोकः । अतः सोऽभ्युदयेच्छया धर्म मनुधावति । मनुष्याणां हृदिसूक्ष्मरीत्या धर्माधर्म विवेको, धर्मे पक्षपातरूपो ऽधर्मेचो पेक्षारूपो निहितो वर्तते, अतश्च जना अभ्युदयेच्छया धर्ममनुधावन्ति ।

परं, परश्शतान् धर्मानतुधावद्भिर्जनैः किं लब्धः स्व मनोरथः ?

किं चिराकाङ्क्षितं सुखमधिगतम् ? किं वा विलयतां नीतम दुःखम् ? अत्र सर्वत्रापि नकारेणैवोत्तरणीयं भविष्यति । अतएव नैराश्याभिभूता आशाविघातजनितधर्मविश्रम्भा केचिन्नास्तिकतां भजन्ते, ऽपरे धर्म मुपहसन्ति, इतरे "यावज्जीवेच्चिरं जीवेन्नास्ति मृत्योरगोचरः" इति चार्वाक राद्धान्त मनुसरन्तो यथेष्टं चरन्ति । अन्ये तु "महाजनो येन गतः स पन्थाः" "तातस्य कूप इति ब्रुवाणाः" पितृपितामहादागतं धर्म मुन्मनस इव सन्तश्चरन्ति सभ्यंमन्यायां जगत्यां सर्व मप्येतत् संघटमानं दृश्यते ।

परं किमेवं धर्मादित्यागेन यथेष्टचारेण वालप्स्यते शाश्वतिकं सुखम्? न हि। परमस्माभि परहृनाद माघुष्यते यद्वैदिक धर्माश्रयेणावश्य मधिगंस्यते ऽधिगतम्।

इवोल्यूशनथ्योरीस्पृशः स्वतन्त्रविचारकाः कथयिष्यन्ति, यद् वेदपाठादयस्तु प्राचिनाना मलीकाग्रहाःसन्ति,तदनुसरणेन तु ध्रुव मेवावनति गर्ते पतिष्याम इति। अपरे तु संगिरन्ते ऊरीकृत मस्माभि र्यन्नस्या त्का ऽपि अवनतिः वेदा नुसरणे 'कामं सन्तु वेदेषू त्तमा विचाराः परं बहुवायास जन्यो वेदोपगमः 'अनेकसंवत्सराभ्यासेन वेदार्थः स्पष्ट मेव शक्यते तत्वतो ज्ञानन्तु ततो ऽपि दुस्साध्यम् चेदल्पायासेन स्वल्पे चापि काले तदेवोपलब्धु शक्येतापरया विधया व्यर्थः श्रमस्तर्हि वेदोपगमे। "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इति।

चेद् वेदाध्ययनेन किमप्यपूर्व मभिनवं वाऽऽविर्भवेतत्तर्हि प्रयत्न साफल्यं स्यात्। तदिदं तेषां मौग्ध्यमेव द्रढयति।

इतरेषु धर्मेष्वयमस्ति बृहद् दोषो यत्ते मनुष्य जीवनस्य न सार्वङ्गीनं विचारं कुर्वन्ति, ते तु केवल मेकमेवाङ्ग पुष्णन्ति 'एकमङ्ग पुष्ण न्तस्ते ऽपरान्या वश्यका न्यङ्गानि उपेक्षन्ते। परमेकेन चक्रेण यथा न कदाचिदपि रथस्य गति र्भवति तथा मनुष्य जीवनस्य केवल मेकाङ्ग पोषणेन न गतिः'। स्वारम्भावस्थाया न्त्वेते धर्माः हीन गुणो द्दीपनाय विशेषतया प्रायतन्त 'परं गच्छता कालेने तरा नोपेक्ष्य केवल मेक मेव स्वीकृतवन्तः 'सोऽपि नापराभावे यथावत्पालयितु शक्यते इत्यवशिष्ट मपि लुप्यते। यथाहि बौद्धैः केवल माचार शास्त्रस्य तत्राप्यहिंसायाः प्रचारं कुर्वता संसार स्व हेयतोप दिष्टो। परं न सर्वथा घृणा विषयं जगत् 'अस्ति संसारः संसारो न त्या सार इति। ईदृशी बौद्धादीनां शिक्षा न लाभकरी वर्तते नच चिराय चलितुं शक्यते, मनुष्य स्वभावस्य प्रति कूलत्वात्। सृष्टि कार्य मव, श्य चलिष्यति, अत एव ये मुधैव मनुष्यस्वभाव दोषं प्रकृता वास

जयन्ति न ते सम्यगाचरन्ति । एवमेव यवनाः प्रकृत्यासक्तिं बहुधो पदिशन्ति । नाध्यात्मिके विचारे तेषा मनुरागः । परं वैदिक धर्मे तु मध्यमः पन्था अनुस्त्रियते 'मनुष्य जीवनो पयोगिषु सर्वेष्वङ्गेषु विचारः क्रियते देशकाल पात्र भेदात्तेषां हेयतोपादेयतोपदिश्यते। अपरञ्च 'वयं विश्व सिमो यदवश्यं वैदिक धर्माश्रयणेन वेदावगाहनेन वा कोप्यऽभिनवो जगदु पकारी च विचार आसादयिष्यते । ये हि वैदिकाः सूक्ता अनभिज्ञतया ऽनर्थका अकथ्यन्त जनै रस्ति तेषा गूढो ऽभिप्रायः । अद्यत्वे ये वैदिकाः सूक्ता यज्ञेषुपशुहिंसाप्रतिपादका अभिधीयन्ते त एव राज कार्य प्रतिपादकाः सन्तीति महता विचारेणाधुनोपलब्धम् । कीदृशे नादर्श राज्येन भाव्यमिति सम्यग्तया तेषु नि दर्शितम्, तद्भावतो कनेना नुसरणेन चावश्यं श्रयो भविष्यति । अस्ति तत्राभिनवं वस्तु ।

एवमेवान्येषां सूक्ताना मप्यर्थो गूढोयोऽनभिज्ञतया नाद्या, प्युपलब्धः, यथा यथा हिवेदमन्त्राः विचारयिष्यन्ते तथा तथाऽवश्यं नूतनं जगदुपकारि वस्तूपलप्स्यते । आधुनिके सभ्ये जगति नास्ति कोऽपि गुणो यो वैदिक सभ्यता मतिशेते, परं वैदिकी सभ्यता सर्वमपीतरद् अतिशेते । तदवलोकनेन आधुनिक सभ्यतादोषाः आविर्भविष्यन्ति, तथा च तेषां सुकरा परिशुद्धिः । एवञ्चास्माभिरवश्य माशावद्भिर्भाव्यं, कर्तव्यञ्च यथाविधि वेदावगाहनम्, येन सतत मस्माकं जगतश्चोपकारः स्यादित्यलं पल्लवितेन ॥

'देवः'

---

# प्राणाभ्यर्थना ।

चञ्चलचल मञ्जिकारः—

नौकाभवसागर जलमूले। ध्रुवा।

दोलायति किल मध्येधार-
मतिचिन्ता कुलितं नविचार-
मिहममम्मानसमखिलागार याता कालचक्र करकूले ॥१॥

वराडक मागलितं तदपार
कर पद युगुल मशक्त मकार
संकुचितं मानस मपिहार मतिशय श्यामशर्वरी मूले ॥२॥

उद्धत यहुभ्रषनक्रभुजङ्ग-
माकुल चञ्चल चपल तरङ्ग-
मञ्जनि कर्मसमीरोभङ्ग मिहदोषावलि विस्तृतशूले ॥३॥

मरणाचल पनामवधूय
प्रायस्तस्या बलभवलूय
एषा सहसा शकली भूय यास्यति संसृतिनदतलमूले ॥४॥

अलमलमतिशय यातं भगवन्
नान्यागतिरिह नाथ कथञ्चन
करुणारश्मि मुदञ्चय भगवन् नाधिक काल इतः सुखतूले ॥५॥

'श्रीवत्सः'

---

# भारतम्

यत्र—

विचित्र चारु चातुरी वसन्त पुष्प माधुरी
मरन्द वृन्द मण्डिता द्विरेफ संघ खण्डिता।
प्रमोद मत्त खञ्जना सुगन्धित प्रभञ्जना
विकासि पुष्प पल्लवा व्यराजताविपल्लवा

---

हिमाचलः सितं यशः प्रकृष्टकूट पंचषः
पतत्रि संघचारुवै जगौ च मन्द मारवैः।
अनेक नक्रकाकुल स्तरङ्गसंघ सङ्कुलः
यदीय पाद पङ्कजं चुचुम्ब सिन्धु रङ्कजम॥

---

नवीन नेत्र माविलं चकार चारुता कुलं
सुरम्य शस्य शोभिता यदीय भूमिरादितः।
विहङ्ग वृन्द मन्दमन्द माजगौविचित्र छन्द-
मन्ततः सुशोभितं तरङ्गिणी प्रवाहतः॥

---

ऋषि प्रकाण्ड संश्रितं समस्त देवताश्रितं
समस्त मौलितां गतं गतं समस्त पालिताम्।
अहोनुकाल जृम्भितं यदेत दस्त्य शोचितं
तदेव हन्त भारतं सुशोच्यमस्त्य नारतम्॥

---

श्रीवत्स

# होलिका ।

एतेषु दिनेषु अस्मिन्नार्यावर्ते होलिकापर्व मान्यते जनैः । महान् कालो व्यतीतः । प्रतिसम्वत्सरमेतानि दिनानि समायान्ति विचारितमत्र कदाचिच्छिष्टद्भिः किमर्थमयमुत्सवः प्रति संवत्सरं मान्यते, को वास्य लाभः, किमर्थमयं प्रचलितः । यः कोऽपि प्राचीनेषु भक्तिमान् वर्तते, यो वा तेषां गौरवं मनसि निदधाति, नस उत्सवान् मूर्खतया प्रचरितानिति ज्ञास्यति, अवश्यं तत्र किमपि बुद्धि—पूर्वकत्वमन्वेषयिष्यति । तदहं पाठकानां समक्षे यथालोचितानि कारणानि निदधे आशासे च यत्ते अस्मात् किञ्चित् शिक्षयिष्यन्ति तदनुकूलञ्चचरिष्यन्त्यपि असमर्थाश्चेदाचरितुं तदा बाधक कारण निरसनपूर्वकं साधक कारणान्युपादातुं प्रयतिष्यन्त इति ।

फाल्गुनपौर्णमासीव्यतिक्रान्तः शीतकालो विनिष्क्रान्तः, वासन्तिक मासस्य चैत्रस्यायमारम्भः, पौर्णमासोऽय मुत्सवः प्रारभ्यते, आसप्ताहमस्य प्रचारो वर्त्स्यते । तत्र प्रायशो भवद्भिरनुभूतं भविष्यति यद्बालका एषु दिनेषु शीतलारोगग्रस्ताः भवन्ति ।

ये बालका एतद्दिनकृतमातापितृसंगमन पूर्वकाः समुत्पन्नास्ते, यैश्च बालकै रेतेषु दिनेषु मातृपयः पीतं तेऽप्यनेन रोगेण ग्रस्ताः भवन्ति । नेदं स्वमनःकल्पितं परमायुर्वेदविद्भिरित्थमेव ज्ञायते । तदनुमित्या शब्दप्रमाणेनवाऽन्वेष्टव्यम् । कारणमिदमेवावगम्यते यस्मात् शरीरस्थे लोहित धातौ दुग्धे च विकृति रापद्यते । माता स्वपुत्राय दुग्धं पाययन्ती तस्मै विकार मादधाति यश्चरोगं, जनयति, पत्या संयुक्ता च स्त्री आगामिने पुत्रायारम्भत एव विकारमादधाति तत्खलु स्त्रिया पुरुषेणच एतेषु दिवसेषु ब्रह्मचर्य्यव्रतेन संयमवता शीलयुक्तेन च भाव्यम् । अतएव केचिदेतेषां दिवसानान्नाम "शीलसप्तमी" ति कथयन्ति केचि "त्कामदाहे" ति वदन्ति अस्य रोगस्य निवारणाय गृहस्थमात्रैरेषु दिवसेषु होमो विधेयः होमकरणेनैवास्योत्सवस्य

नाम होलिकेतिख्यातमस्ति यदि होम एव न कृतस्तदा नतु होलिका मानिता नापिच रोगनिवृत्तिः कृता । रक्षसो रोगाञ्जनयन्ति । अतो रक्षोहामन्त्रैरयं होमोहोतव्यः । तदा इमे मातृका रोगाः ( शीतला खसरा, चेचकः ) न कदाचिदप्यस्मिन् भारते पुण्यभूमौ प्रादुर्भविष्यन्ति, समूलनाशश्चैषा मवश्यं भविष्यति । अस्य रोगस्य शमनाय ( शील, मोती, रसौत, गर्दभीपयः ) सप्तपदार्थानाम्प्रयोगःक्रियते। तेषुसर्वेषुशीलं प्रधानं, अतः शीलवता पुरुषेण स्त्रियाच भाव्यमित्यत्राधिकंबलं प्रदत्तमस्ति एतत् कथनं पुराणवाक्येनापि समर्थ्यते ।

युधिष्ठिर उवाच—

किमर्थं फाल्गुनस्यान्ते पूर्णमास्यां जनार्दन ।
उत्सवो जायते लोके ग्रामे ग्रामे पुरे पुरे ॥ १ ॥

भविष्यत् पुराणे उ० प० अ० १३२ श्लोकः

किमर्थं शिशवस्तस्यां गेहे गेहेऽतिवादिनः ।
होलिका दीप्यते कस्मात्फाल्गुनान्ते किमुच्यते ॥ २ ॥
अडाडेतिच का संज्ञा शीतोष्णेति किमुच्यते
कोऽस्यां पूज्यते देवः केनेयमवतारिता ॥ ३ ॥
किमस्यां क्रियते कृष्ण एतद्विस्तरतोवद

श्रीकृष्ण उवाच—

आसीत्कृतयुगेपार्थ रघुर्नामनराधिपः ॥ ४ ॥
शूरः सर्वगुणोपेतः प्रियवादी बहुश्रुतः
स सर्वां पृथिवीं जित्वा वशीकृत्य नराधमान् ॥ ५ ॥
धर्मतः पालयामास प्रजाः पुत्रानिवौरसान्
न दुर्भिक्षं नच व्याधि र्नाकालमरणन्तथा ॥ ६ ॥
नाधर्मे रुचयः पौरा स्तस्मिञ्छासति पार्थिव
तस्यैवं शासतो राज्यं क्षात्रधर्मरतस्य वै ॥ ७ ॥
पौराः सर्वे समागस्य त्राहि त्राहीत्यथा ब्रुवन्

पौरा ऊचुः—

अस्माकं गृहे काचिड्ढौंढा नामेति राक्षसी ॥ ८ ॥
दिवारात्रौ समागम्य बालान् पीड्यते बलात्
रक्षयां कण्डकेनापि भेषजैर्वा नराधिपः ॥ ९ ॥
मंत्रज्ञैः परमाचार्य्यैः सा नियन्तुं न शक्यते
पौराणां वचनं श्रुत्वा रघुर्विस्मयमागतः ॥ १० ॥
विस्मयाविष्ट हृदयः पुरोहितमथाब्रवीत् ।

रघुरुवाच—

ढौंढेति राक्षसी केयं किंप्रभावा द्विजोत्तम ॥ ११ ॥
कथमेषा नियन्तव्या मया दुष्कृतकारिणी
रक्षणात्प्रोच्यते राजा पृथिवी पालनात्पतिः ॥ १२ ॥
अरक्षमाणः पृथिवीं राजा भवति किल्विषी ।

वसिष्ठ उवाच—

शृणु राजन् परं गुह्यं यन्नाख्यातं मया क्वचित् ॥ १३ ॥
ढौंढा नामेति विख्याता राक्षसी मालिनः सुता
तया चाराधितः शम्भुरुग्रेण तपसा पुरा ॥ १४ ॥
प्रीतस्तामाह भगवान्वरं वरय सुव्रते
यत्ते मनोऽभिलषितं तद्ददाम्यविचारितम् ॥ १५ ॥
ढौंढा प्राह महादेवं यदि तुष्टः स्वयं मम
न च वध्या सुरादीनां मनुजानाञ्च शङ्कर ॥ १६ ॥
मां कुरु त्वं त्रिलोकेश शस्त्रास्त्राणां तथैव च
शीतोष्णवर्षासमये दिवा रात्रौ बहिर्गृहे ॥ १७ ॥
अभयं सर्वदा मे स्याश्वत्प्रसादान्महेश्वर

शंकर उवाच—

एवमस्त्वित्यथोक्त्वा तां पुनः प्रोवाच शूलभृत् ॥ १८ ॥
उन्मत्तेभ्यः शिशुभ्यश्च भयं ते सम्भविष्यति

भूता वृतौ महाभागे मा व्यथां हृदये कृथाः ॥ १९ ॥
एवं दत्वा वरं तस्या भगवान् भगनेत्र हा
सार्गे लब्धोयथार्थाय स्तत्रैवान्तरधीयत ॥ २० ॥
एवं लब्ध वरासातु राक्षसी कामरूपिणी
नित्यं पीडयते बालान् संस्मृत्य हरभाषितम् ॥ २१ ॥
अडाडयेति गृह्णाति सिद्ध मंत्र कुटुम्बि.ी
गृहेषु तेन सा लोके ह्यडाडेत्यभिधीयते ॥ २२ ॥
एतत्ते सर्व माख्यातं ढौंढायाश्चरितं मया
साम्प्रतं कथयिष्यामि ये नोपायेन हन्यते ॥ २३ ॥
अद्य पञ्चदशी शुक्ला फाल्गुनस्य नराधिप
शीतकालो वि निष्क्रान्तः प्रातर्ग्रीष्मो भविष्यति ॥ २४ ॥
अभय प्रदानं लोकानां दीयतां पुरुषोत्तम
यथाद्याशंकिता लोका रमन्ति च हसन्ति च ॥ २५ ॥
दारुजानि च खण्डानि गृहीत्वा समरोत्सुकाः
योधा इव विनिर्यान्तु शिशवः सम्प्रहर्षिताः ॥ २६ ॥
संचयं शुष्क काष्टाना मुपलानाञ्च कारयेत्
तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्र विस्तरैः ॥ २७ ॥
ततः किलकिला शब्दै स्ताल शब्दै र्मनोहरैः
तमग्निं त्रिःपरिक्रम्य गायन्तु च हसन्तु च ॥ २८ ॥
जल्पन्तु स्वेच्छया लोका निःशंका यस्य यन्मतम् ।
तेन शब्देन सा पापा होमेन च निराकृता ॥ २९ ॥
अदृष्टघातै र्डिम्भानां राक्षसी क्षयमेष्यति

थी कृष्णा उवा च—

तस्यथं वचनं श्रुत्वा स नृपः पाण्डुनन्दनः ॥ ३० ॥
सर्वं चकार विधिवदुक्तं तेन च धीमता
गता सा राक्षसी नाशं तेन चोग्रेण कर्मणा ॥ ३१ ॥
ततः प्रभृति लोकेऽस्मिन्न डाडाख्यातिमागता
सर्वदुष्टापहो होमः सर्व रोगोपशान्तिदः ॥ ३२ ॥
क्रियतेऽस्यां द्विजैः पार्थ तेन सा होलिका मता
सर्व साराति विश्वेयं पूर्वमासीद्युधिष्ठिरः ॥ ३३ ॥

सारस्वातफल्गुरित्येषा परमानन्द दायनी
अस्यां निशागमे पार्थसंरक्षयाः शिशवो गृहे ॥ ३४ ॥
गोमयेनोपसंलिप्ते स चतुष्के गृहाङ्गणे
आकारयेच्छिशु प्रायान्खड्गव्यग्रकराश्नरान् ॥ ३५ ॥
ते काष्ठ खण्डैः संस्पृश्य गीतै र्हास्यकरैः शिशून्
रक्षन्ति तेषां दातव्यं गुडं पक्वान्नमेव च ॥ ३६ ॥
एवं ढौंढित मात्रस्य स दोषः प्रशमं व्रजेत्
बालानां रक्षणं कार्यं तस्मात्तस्मिन्निशागमे ॥ ३७ ॥
अग्रे चास्य प्रतिपद्दिवसः कृत्यं वर्णितमस्ति तन्न प्रदर्शयितु—
मावश्यकम् ।

नारद पुराणेऽप्यस्याः कथा समायाति तत्रापि ध्यानं देयं विद्वद्भिः
यथाः—

फाल्गुने पूर्णिमायां तु होलिका पूजनं मतम् ॥ ना० पु० पू० ख०
श्र० १२४ श्लो० ७६

संचयं सर्वकाष्टानामुपलानां च कारयेत् ।
तत्राग्नि विधिवद्धुत्वा रक्षोघ्नैर्मंत्रविस्तरैः ॥ ७७ ॥
असृक्‌पामयत्रस्तैः कृता त्वं होलिका निशम्
अतस्त्वां पूजयिष्यामि भूते भूति प्रदाभव ॥ ७८ ॥
इति मन्त्रेण संदीप्य काष्टादि क्षेपणे स्ततः
परिक्रम्योत्सवः कार्यो गीतवादित्रनिःस्वनैः ॥ ७९ ॥
होलिका राक्षसी चेयं प्रह्लाद भय दायिनी
ततस्तां प्रदहन्त्येनां काष्टाद्यैर्गीत मङ्गलै ॥ ८० ॥
संवत्सरस्य दाहोऽयं कामदाहो कतान्तरे
इति जानिहि विप्रेन्द्र लोकेस्थितिरनेकधा ॥ ८१ ॥

प्रह्लाद शब्देन च सुख विशेष एव ग्राह्य अन्यथा रघु राज्यात्
होलिकोत्सवारम्भ विरोधः ।

रक्षः शब्देन क्रिमि विशेषाः ग्राह्याः ये रोगं जनयित्वा सुख
नाशं कुर्वन्ति तेषां रक्षोहा यज्ञेन विनाशः सयुक्तिकम्प्रतीयते ।

# प्रति मार्चनम्

अयि देशिक पुंगवाः—

इदं हि भारतं क्रीडा निकेतनमभूत् भगवतो धर्मस्ये त्यत्रनकोऽपि संशयीरन्। धर्मः स्वीयमभ्रंलिह कीर्तिस्तम्भं भारत भुवि निखातवानिति कल्पनाभोगे न बलवन्त मुपरोध मुत्पश्यामः। यत् सत्यं महानयं भागधेयविभवो भारतीयानाम—यदेतेषां प्राचीन ग्रन्थेषु न कुहचनापि प्रतिमार्चनं धर्मस्याङ्ग उपनतमिति। स्वधर्म ग्रह ग्रहिलाः प्रत्ययतिष्ठन्ते केचन यद्दग्वेदे प्रतिमार्चनं समुपलभ्यत–इति। परं नायं समीचीनः कल्पः। नहि कस्मिश्चित् मंत्रे "प्रति मादि शब्द-दर्शनात् भगवतो नियन्तुः परमेष्ठिनः प्रतिमां संभाव यितुं कोऽपि प्रभुरिति। नापि भङ्ग्यन्तरेण पाणिपादादिभिः समुपवर्णितस्य महतो विराट् पुरुषस्य प्रतिमासंभावनं निपुणं संजाघटीति। यतो हि एतादृशं वर्णनं निराकारस्य अनियतात्मभि दुर्लभस्य जगदीशस्य परिचय मेव कारयितुं सप्रवृत्तमिति। अभिनन्दति चेदं मतं निरुक्तकार "पुरुष विधाः स्युरित्कं चेतनावद्धि स्तुतयो भवन्ति तथा भिधानानि। यथो एतच्चेतनाद्धि स्तुतयो भवन्तीत्य चेतनान्यप्येवं स्तूयन्ते संदर्भे णानेन स्पष्ट मेव सजातं यत् करचरणादिभिः तस्य भूत भावनस्य स्तुतिः किं मुपजीव्य प्रवृत्तेति। वस्तुतस्तु न वेदेषु प्रतिमार्चनमस्तीति। 'नाथांदिन्द्रं प्रतिमानानि देभुरित्यपि ऋग्भागोऽस्माकं मत मेवा विकलं परिपुष्णाति। महानयमाश्चर्यः नश्चेतसि प्ररोहति यदेतै पुरोभागिभिः "न तस्य प्रति मास्ति यस्यनाम महद्यशः। इत्यादी व चांसि कुतो ने त्राति वर्तीनि कृतानि। हन्त! कीटमुखावलीढ़ मणिरिव कतिधारं भगवानयं धर्मः हीन प्रभो ना जायत ? भारतस्याधः पातं कामय मानाः वदन्त्यत्र केचन प्रति भटाः—यत्-प्राचीन ग्रन्थेषु प्रतिमार्चनाभावो नूनंअतिशयोक्ति मेवा नुहरतीति। किं न समनुशीलितं व्याकरणम्? अस्ति चेत् किं न स्मर्यते "देवपथादिभ्यश्च। इवे प्रति कृतौ? इत्यादीनि सूत्राणि. एतैः सूत्रैः पाणिनिः विक्रय जीविकार्थयोः प्रतिमयोः प्रत्ययविषये महान्तं भेदं संभाषमाणः

किंन साधयति तस्य समयस्य मूर्तिपूजकत्वम् । यत् सत्यमय मपि दोषः गज भक्त कपित्थ वदन्तः निःसारता मेवावहतीति नो मतिः ।" नहि 'जीविकार्थे चापराये ।' इत्यादि सूत्र कदम्बैः "प्रतिमार्चनं संभवतीति परं केवलं प्रतिम निर्माणं फलैव सिद्धयति सा चास्माकं भारतीयं नैसर्गिनीं कौशली चातुरीमेव नितरामव गमयतीति कस्य न भारत जन्मिनोन्तरङ्गं नावर्जयतीति ।

तत् कुत इयं प्रवृता मूर्ति पूजेति त्वत्र विचारोऽयं केषाञ्चित् 'यद् बौद्धैरियं प्रचालिता मूर्तिपूजेति । मतमिदमेव च स्वामीदयानन्दोऽभिनन्दति । आलीढ बौद्धकुसुमोपदेशेनाशोकभ्रमरेण कियती परिचर्याकृतेति न तिरोहितं विचारकानाम । तत एव प्रतिमार्चनं मन्दिरनिर्माण पुरस्सरं संप्रवृत्तमिति कल्पनायां न वयं कामपि संशीतिं जागरूकां संभावयामः । यतो हि अशोक समयात् पूर्वं न वयं कामपि मूर्तिभूत् कलयाम इति । अतः परमस्माकं शास्त्रे कीदृशी मूर्ति पूजा विहितास्तीति विवरीतुं लेखिनी व्यापारः क्रियते । प्रभूताः समुपायाः मनस्थिति करणे तर्किता पतंजलिना योगशास्त्रे । तत्र 'यथाऽभिमतध्यानाद्वा, इति सूत्रेण मनसः स्थैर्यतापादनाय यथेच्छं ध्यानोऽपि स्वीकृत एव । अत्र—टीका काराणामभिमतध्याने प्रतिमारा धनमपि नो न विरुद्धं परं प्रतिमाभिन्नो जगदीशः सर्वदैव कल्पनं नोऽस्माकं विचारसहम् । अत्राह वादरिः........न प्रतीके न हिसः' ।

अत्राह भाषकार आचार्यः "न प्रतीकेषु आत्ममतिं बध्नीयात् । नहि स उपासकः प्रतीकानि व्यस्तान्याकलयेत् । यत् पुनर्ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति । तदसत् । प्रतीकाभाव प्रसङ्गात् । विकारस्वरूमोपमर्दन हि नामादि जातस्य ब्रह्मत्वमेवाश्रितं भवति । स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा । न च ब्रह्मण आत्मत्वाद् ब्रह्मदृष्ट्यु पदेशेष्वात्मदृष्टिः कल्पनीया । कर्तृत्वाद्यनिराकरणात् । कर्तृत्वादि सर्वसंसार धर्मनिराकरणे हि ब्रह्मण आत्मत्वोपदेशः । तदनिराकरणेन चोपासना विधानम् । अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते । न हि रुचकस्वस्तिकयोरितरे तरात्मत्वमस्ति । सुवर्णात्मत्वेनेवतु ब्रह्मात्मत्वेनैकत्वे

प्रतीकाभावे प्रसङ्गमवोचाम । अतो न प्रतीकेषु आत्मदृष्टिः कर्तव्या, यतेन हि प्रतीकस्येश्वरत्वमिति विशकलितमेव ध्रुवं मन्ये ।

"मातृदेवोभव, पितृदेवोभव, आचार्यदेवोभव, अतिथिदेवोभव," "त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्मवदिष्यामि, इत्यादिभिर्वचोभिः पचदेवताः उपास्यत्वेन विहिता वर्तन्ते । तेषां पूजा सत्कारश्च सर्वदा सर्वैरैव कर्तव्य एवेति सुधोपमः समुपदेशोनः शास्त्राणाम् । परं न मन्दिर चैत्यादिरूपेण प्रतीकमेव सर्वस्वं सभाव्यमानैः कुत्रापि प्रतीकार्चनं विहितमिति ।

हन्त ! कैश्चित् स्वार्थिभिः मूढैः मनः स्थैर्यं प्रतीकोपासनस्य प्रयोजन मनवबुध्यमानै र्ननु कियदनार्यमाचरितमिति कस्य न भारतहितैषिणः शिरः शूलमुत् कोपयति । नूनं कैश्चत् तमः प्रधानैः पुम्भिः निजोदरदरीं पूरयितु मेव संचालितेयं महान्तमनर्थं प्रस्तूतवतीति कोनवेत्ति ? भारतीयानामेव वीराणामपि मुहं मदीयसमये सोमनाथ मन्दिरे पराजयोऽपि तेषां प्रतीकोपासन निवन्धनमेवास्ति । यत् सत्यं सनातनार्यधर्मद्रुममेघ समूलन्मुलयितु मभियुञ्जाने प्रत्यर्थि वर्गे कथं नामास्य शास्त्रासु समाश्रितानां सुखोदर्कः संभवेदिति निपुणं विमृष्य प्रतिमोपासनप्रचारेण समाजविध्वंस पटुभ्यः अस्माकमाचार्य खड्गपाणिरजायत । तेन महर्षिणा कण्ठेहत्यनिन्दितं प्रतिमार्चनमिति ।

अयि मित्रमणयाः—

क्षणमितोऽपि नयने प्रसार्यताम् । कियतीयं प्रतीकोपासनास्माकं धर्मग्रन्थैः कदर्थितेति 'अथयोऽन्यां देवतामुपास्ते ऽन्योऽसावन्योऽहमस्मीतिन सवेद ? 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ! किं च—अतिमूल्योऽयं समयः । जनो हि सौभ्यमिमं समयं प्रतिमार्चने व्यतियन्तीति महत्कष्टम् अतश्च भूयोऽपि प्रयासः कर्त्तव्यः येनेथ विनाशिनी मूर्त्तिपूजा जगतो विलीयतामीयादिति कस्यचिल्लिखित् समाज सेवकस्य न तु मूर्त्ति पूजकस्था शसेति ।

---

# ईश वन्दना ।

वन्दे सुन्दर मन्दिरच्छविचयच्छातेक्षणख्यातिम-
च्छाश्वद्बोधघनं तुरीयममलं शान्तं प्रधानेतरम ।
नानाकल्पन जल्पन व्यवहृते राधारमेकं परं
धातारं रविचन्द्रयोरपि तथा सेतुं महेशं हरिम् ॥ १ ॥

अपीपरद्योनिजवेदनेन
जगन्ति सर्वाणि चराचराणि ।
गन्धः पृथिव्यामिव शैत्यमप्सु
सनः सना सङ्गमयेन्मनांसि ॥ २ ॥

यच्चिन्तनं यत्स्मरणं यदीक्षणं
यदर्चनं तत्स्तवनं यदर्पणम् ।
धुनाति सद्यः शमलानि पुंस-
स्तमात्मनां साक्षिणमर्चयामि ॥ ३ ॥

हरेति यन्नाम सकृद्गृणन्सन्
विधूतपापः श्वपचोऽपि याति ।
नाकं विना मा किमु तं हि नाना-
जनीर्धुनी गोष्पदये त्रिकामम् ॥ ४ ॥

तस्येशितुः सकललोकविलोकितुश्च
धर्मावनाय मुनिचेतसि वृत्तिभाजः
निःसीमतोपदद्यादयनोच्चदातुः
सङ्कीर्त्य मङ्गलमयानि मनः पुनीमः ॥ ५ ॥

हे नाथ संसृतिमिमाश्चिरतो जुषाणां-
स्त्वां विस्मरन्त इति मा भज वैमनस्यम् ।
किं धूलिधूसरितपक्ष्मणि नीचवृत्तौ
बाले प्रसूर्निजशिशौ विकरोति चित्तम् ॥ ६ ॥

तस्मात्सदैव भगवन्करुणाद्र्द्रसान्द्र-
पीयूषमङ्गलपयः कणमुत्किरन्त्या ।
दृष्ट्या विलोकय विभो भवदङ्कभाज-
श्चेतांसि निर्मलय गाङ्गमिवाङ्गवारि ॥ ७ ॥

एते वयं गुरुकुलोत्सववर्षसत्र-
दीक्षाक्षणाः क्षणद ! लीनमला भवेम ।
तत्त्वं तथा तनुमनांसि यशांसि पुण्य-
भाञ्जि प्रभोऽनुपमशासन ! नस्तनुष्व ॥ ८ ॥

राधन्तां यतयो भवन्तु विमला दीक्षा महैर्मण्डिता
राजन्तां मतिदोषमोषचतुरा विद्योदया सद्याः
हूयन्तां किल वर्णिभिः प्रतिसवं पूताज्यभागैः सदा
प्रोद्धूमध्वजलोलहेतिविसरा हव्यार्थिनो वन्हयः ॥ ९ ॥

नृसिंहदेवशास्त्री

———

# मनोयोगः ।

अयि प्रियपाठकमहाभागाः ! यस्मात्सर्वा विद्या भारतीयज्ञान भाण्डारस्योज्ज्वलतमेभ्यो रत्नेभ्यो वेदेभ्यो निःसृत्य भूमण्डले विस्तृता बभूवुस्तस्माद्भारतवर्ष एव सर्वेषामन्यदेशानां गुरुः, सर्वे देशास्तस्य शिष्या इति भवन्तः प्रतियन्ति । अस्त्वसंशयमिदं भवतां गौरवहेतुः परन्त्वन्यान्देशान् प्रति तिरस्कारकारणं कदापि मा भूत् । यथा गुरुः शिष्याणां भाषितानि प्रेम्णा शृणोति तथा भवन्तोऽपि यत्किञ्चित्पाश्चात्यविद्वांसः शिष्या इव स्वेषु ग्रन्थेषु लिखन्ति तत्सर्वमादरेणाधीयीरन् । भवद्भिरेष विचारः कदापि न करणीयो यत्तानि पुस्तकानि यवनभाषायां लिखितानि नातः पठनयोग्यानि ।

भारतीयैः ऋषिभिः प्रणीता ग्रन्थास्तु भवद्भिरहर्निश पठ्यन्ते तानधिकृत्य मया नात्र किमपि लिख्यते । अहं सम्प्रति पाश्चात्य–देशेषु प्रचलितस्य मनोविज्ञानशास्त्रस्य ( Psychology ) विषये किञ्चिद्वक्तुमना अस्मि । मनसः सर्वा विकृतयस्तस्मिञ्छास्त्रे वर्ण्यन्ते । अस्य निबन्धस्य शीर्षकोऽपि मनोयोगो ( Attention ) मनसो विकारविशेषोऽतः सोऽपि तत्र निरूप्यते ।

प्रायः सर्वे भवन्त एतत्कथितं शृण्वन्ति 'मनोयोगेन सह स्तोत्राणि पठ;' 'सावधानतया गुरोर्भाषितानि शृणु;' 'ध्यानेन सह कार्य्याणि कुरु' इत्यादि । किमेतस्य कथनस्य मूलम् ? किमर्थमेतदुच्यते ? कानि प्रमाणानि मनोयोगस्यावश्यकतायाः ? इत्यादीनां प्रश्नानामुत्तरं दातुमस्मिंल्लेखे समीहे ।

मनोयोग एका मानसिकशक्तिर्ययान्तर्बोधे ( Consciousness ) चेतना ( sensation ) जायते । मनस्तु पाश्चात्यैरभौतिकं मन्यन्ते । तस्य मज्जया ( brain ) सह घनिष्ठः सम्बन्धोऽस्ति, तस्याः परिवर्तनैस्तदपि परिवर्तते ।

साम्प्रतं मनोयोगस्य यथानिर्दिष्टान् भेदानुदाहरणैः सह दर्शयामि । मनोयोगस्य निम्नलिखितानि त्रीणि लक्षणानि सन्ति ।

( १ ) मनोयोगस्य कोऽपि विषयो विद्यते यस्मिन् स स्थाप्यते । स विषयस्त्रिप्रकारः ।

[ अ ] इन्द्रियग्राह्यो यथा सौन्दर्यावलोकने ;
[ ब ] बुद्धिग्राह्यो यथा विचारणे ;
[ स ] बुद्धीन्द्रियग्राह्यो यथा चतुरङ्गद्यूते ;

( २ ) मनोयोगः कदापि स्वविषये स्थापयितुं न शक्यते । यदि तस्मिन् प्रसक्ता विकृतिर्न भवेत् । यथैकस्यैव वस्तुनो दीर्घावलोकनेन तस्मिन्नरुचिर्जायते ।

( ३ ) मनोयोगः कदाप्येकपदं एकस्मादधिके विषये दातुं न शक्यते । मनोयोगस्य द्वौ भेदौस्त :—

( १ ) यत्नकृतः—स च कस्मिंश्चिदपीदृशे विषये मनोयोगस्य स्थापनरूपो यः स्वयं चित्ताकर्षी न भवति । यथा साहित्यप्रियस्य छात्रस्य परीक्षार्थं गणितस्य पठनम् ।

( २ ) अयत्नकृतः—स च कस्मिन्नपीदृशे विषये मनोयोगस्य स्थापनरूपो यः स्वयं चित्ताकर्षी विद्यतेऽतः प्रयत्नं नापेक्षते । यथा सुन्दरवस्तुनोऽवलोकनम् ।

मनोयोगस्य परिणामोऽयं भवति यत्तेनोपलक्षितो विषयोऽन्तर्बोधे चेतनां जनयति । चेतनाया अस्तित्वात्स विषयः कालान्तरे स्मर्तुं शक्यते । बाह्येन्द्रियैरनुभूतस्य पदार्थस्य मनोयोगाभावात् नैव किमपि ज्ञानं भवति । यथान्यस्मिन्विचारे निमग्नो जनः पुरो गच्छन्तं गजं दृष्ट्वाऽपि पृष्टः सन् 'न गजो मया दृष्ट' इति भाषते । अतो मनोयोगं विना कृतस्य व्यापारस्य सर्वथा निष्फलता ।

'स्तोत्रपाठेन मनसि शुद्धता जायते, विषयेभ्यश्च तत्परावर्तते' इति यद्भगवता दयानन्देन प्रोक्तं तत्सम्यङ् मनोविज्ञानानुकूलम्। कुतः ? वयं जानीमो यन्मन इन्द्रियाणां प्रवर्तकमस्ति। मनसि यद्विद्यते तत्कार्ये परिणतं भवति। एतदेव ध्यानोत्पन्नकर्म कथ्यते। एनमधिकृत्यैकां कथां लिखामि।

इब्राहीमिनामा कश्चिद्दरिद्रोऽष्टादशवर्षदेशीयो यवन आसीत्। स कमपि वित्तवन्तं निजं बान्धवं धनं प्रार्थितवान् तस्माच्च प्राप्तधनः सन् काचस्य व्यापारमारब्धवान्। एकस्मिन् दिवसे पण्यशालायां तिष्ठन् स विचारितवान् यदनेन व्यापारेणाहं मासत्रयेण धनिको भविष्यामि तदा कामपि रूपाढ्यां कन्यां विवोढास्मि। सा गृहस्य सर्वाणि कार्य्याणि करिष्यति। यदा सा मदुक्तं न विधास्यति तदा तां पादेन ताडयिष्यामि। इति विचारयन्नेव स पादप्रहारं कृतवान् निकटस्थितानि काचवस्तूनि च चूर्णितवान्। दृश्यतामयमपूर्वो मनसः प्रभावः।

स्तोत्राणां दिने दिने पुनरावृत्त्या किं प्रयोजनम् ? तया तु मनस्येकस्य प्रकारस्य संस्कारो जायते। यस्य कार्य्यस्य संस्कारो विद्यते तत्कार्य्यं सुकरं भवति तस्य विरुद्धं च दुष्करं जायते। स्तोत्रेषु निर्दिष्टा गुणाः सुगुणाः सन्ति। तेषां मनोयोगसहितया पुनरावृत्त्या मनसि दृढत्वं सम्पद्यते। अतएव सुन्दरगुणान्वितानि कार्य्याणि स्तोत्रपाठकै र्विधीयन्ते, विपरीतानि च दुष्करत्वात्त्यज्यन्ते। धर्मस्यायमेवोद्देशोऽस्ति यन्नरः शुभानि कार्य्याणि कुर्वीत। अतः शुभकार्य्याणां विधाने साहाय्यप्रदानि स्तोत्राणि सर्वैः धर्मप्रियैरवश्यमाचरणीयानि। तेषां पठनं च मनोयोगेन सह विधातव्यम्।

शान्तिः! शान्तिः!! शान्तिः!!!

शिवदयालुगुप्तः
हिन्दूकालिजस्थः
काशग्राम्

---

# समोऽनुवादः

## ( कुण्डलिका )

हन्त, तरी मे लघुतराभूरिभारभरिताच ।
प्रतिदिशमावर्ता हरे, सत्तो हा, नेता च ॥

सत्तो हा, नेताच समीरो वेगधरोऽयम् ।
मध्येधारं तरणिरुपरिघनवनावनोऽयम् ॥

अशरणशरण ! परेश ! न कोऽपिविनाऽह भवन्तम् ।
दयामयाऽऽनय दयादृशा तटमनु वहन्तम् । ?
हन्त ! तरी ॥

---

धन्या धन्या निशेयं निज हृदि समभूत्कोपि भावः स्वभावा-
द्यस्यामस्या धरण्याः शुभनियतिवलात्कस्यचिद्बालकस्य
श्रुत्वा कृत्वा प्रकाशं प्रथममय ममुं यत्प्रभावादजैषीत्
सर्वामुर्वीमुदग्र प्रतिभट पटलीं द्रावयन्द्रागयत्नः

---

अज्ञानप्रतम प्रविष्ट जनतां विज्ञान विद्योतनैः
प्रज्ञाराजहतरुभरा विभवतः प्राबूबुधत्प्राकृताम्
यज्ञेशश्रियमुद्वहद्भुवि दयानन्दात्मनान्दोलितं
विज्ञौघः स्वकृतज्ञता तरलितः सास्मर्यते यन्महः ॥

---

लोकं लोक मलौकिकैः गुण गणैः शोशुभ्यमानां तनुं
श्रात्रं श्रावमनर्गलश्रुति लसद्वाक् चातुरी माधुरी
लाभं लाभ मलभ्य जीवन वनी साफल्यदां सन्मतिं
स्मारं स्मार मितापि यस्य हि मुदं सामोमुदीति क्षितिः

---

यन्मानुषीं जनिमवाप्य महर्षितां यः
कर्मावनौ कलियुगे हि सुयोगितां च
धर्मात्मनो विश्ववतां समदीदृशन्नो
निर्माय मद्य जगतां स कुतो न वन्द्यः

देहः पूर्ण दयावहः पतित तानन्दः मतार्न मनः
श्रौतीयस्य सरस्वती श्रुत सजन्मिलें च नेत्र पुनः
कर्णौं लौंकिक शान्ति शब्द कलनो तृष्णौ बभूवेश्वरः
स्प्रष्टुतुनि यंनिराधि हृदयो लोकोप कार क्षमे

# ऋषेर्जयध्वनिः

तस्य भद्रा ! महर्षेर्जयं वदत ।

येन मातृक्षितेर्दीनमाक्रन्दनं, व्यपनीतं तदीयं यशो वदत ॥
येन सुप्ता वयं पूर्वमुन्निद्रिता, स्तस्य नामामलं प्रत्यहं जपत ॥
येन तापाभिभूतं जगच्छमितं तस्य नव्योपदेशामृतम्पिबत ॥
येन मेघस्वनेन दिशो विजिता, स्तस्य सर्वत्र लोके जयम्वदत ॥
आर्यजातिः पुनर्येन संजीविता, सूक्ति मुक्तागणै स्तं सदार्चयत ॥
मृत्यु र्जितो ब्रह्मचर्येण येन, तस्य भद्राः महर्षेर्जयं वदत ॥

---

तारय पारमपार ! महेश्वर !
मोह निशायां दुःख दशायां तारय करुणागर ! ॥
मानसपीडां हर हर मूर्ते ! पालय पालन कार ! ॥
संसृति कूपाद्धीनदशायामुद्धर दीनाधार ! ॥
दारुणरजनी तमसि सुरेशोद्दीपय नो श्रुतिसार ! ॥
मोहनिमूढान् परकरबद्धान् मोचय संसृतिसार ! ॥
करुणासागर प्रेमदिवाकर वृजिन निकर संहार ॥
शरणगतानाम्भवनिधि मध्ये शर्मद शर्मागार ॥

---

# सम्पादकीया विचाराः

अम्भोजिनी वन निवास विलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्द्ध जलभेद विधौ प्रसिद्धां
वैदग्ध्य कीर्ति मपहर्तु मसौ समर्थः ॥

हन्त ! चिरात्खट्वामले दग्धदेहा निर्निद्रिता निशीथे यावदियं वृद्धा भारतमातास्ते स तावदेवोदयाद्रिमारूढो भगवान् मरीचिमालिः, तत्क्षण एवौषधिमभिलषन्ती यावज्जिगमिषति वैद्यं तावदस्तमितो भानुः, सूचिभेद्यं हिस सहायकश्चोदितं सर्वव्यापितमः, इदानीमपि असहायेयमीश्वरानुग्रहात्कमप्येकं चन्द्रं लब्धवती तमवलोक्य दुःखनिवृत्यै कथं कथमपि यतमाना, स्वपुत्रै मार्गाधिनीत एव प्रलयं करै र्घटाभिराच्छादितः स हृदयानन्दकरः सुधांशुः । कागति रिदानीं भवितेत्येव चिन्ताकुलानि लोकमनांसि । भगवानदित्य एवावतु जरठामिमां मातरम् ।

युद्धव्यसनीनां पाश्चात्यानां सन्ति केचन सर्वानुमता अन्तर्राष्ट्रीयाः नियमाः । त इदानीं नियम पालकताया आदर्श मिवात्मानं मन्यमानैः कथमिव पाल्यन्त इति न तिरोहितं पत्र पाठकानां विपश्चिताम् ।

१९०७ ई० हेग पञ्चायते राष्ट्र विषयका आसन् केचन प्रस्तुताः नियमाः । तेषां स्थालिपुलाकन्यायेनात्र निदर्शनं क्रियते

१. शरणापन्नं शस्त्रास्त्रहीनं न हन्यात्

२. आक्रमणे विज्ञान शालाः, धर्म स्थानानि, कलाभवनानि, दाननिकेतनानि यथा साध्यं रक्षणीयानि, यदि तानि युद्ध सहायकानि न स्युः ।

३. प्रजा सम्पद मात्म सान्नकुर्वीत ।

४. पटहनादं लुटनभसमञ्जसम् । निग्रहानुग्रहायत्तान्नियमितुं स्वाधीनाः जेतारः ।

५. ते सुरङ्गाः ( माईनस समुद्रसात्कर्तुं निरुद्धाः येऽकार्य्यो-न्मुखाः होरैकेन निरुपद्रवाः न जायन्ते । ये च स्थानभ्रष्टा लक्ष्य भ्रष्टा-श्च झटित्येव न नश्यन्ति तेऽपि प्रतिषिद्धाः ।

कुम्भ :—अजानन्माहात्म्यं पततुशलभोदीपदहने, समीनोप्यज्ञाना-द्धडिशयुतमश्नातु पिशितम् । विजानन्तोऽप्येते वयमिह विपज्जालज-टिला, न्नमुञ्चामः कामानहहगहनो मोहमहिमा ॥ सञ्जात इदानीं पुनः द्वादश वर्षान्तरं कुम्भ समयः । कान्दशामापन्नमिदं भारतं इदानी-मिति विदितमेव सहृदयानाम् । तथापि दारिद्र्यादिकमनपेक्ष्य धर्म-मनुरुद्ध्यमानाः संख्यातीता लोका आगताः । मासत्रयं विशेषतश्च मासैक मत्रैव गङ्गातीरे तेषां भूतः । महासम्मर्दः ।

---

# राज्ञी शमीरमा

यत् सत्यं विजयते तरां खल्वियं भारत भूर्या हि समस्ता-नपि देशशिशून् निजमधुरस्तन्यमपाययत् । प्राचीनोऽयमसीरियादेशोऽपि नूनं भारतादेव दीन्नामगृह्णादित्यत्र न कस्यापि विचिकित्सा । भारतीयाः पौराणिकगाथा अपि तत्र समुपलब्धा दृष्ट्वा कस्य न चेतसंविस्मयमेति । अस्ति च प्रवादः पुरावृत्तविदां यदभूत्तत्र असीरियादेशे काचित् तेधस्विनी निज रिभाव सम्पदा कम्पित समस्त संसारा राज्ञी शमीरमा । या च निजदेशवास्तव्यमुखेभ्यो भारतीयाननां समृद्धिं श्रुत्वा महता सैन्यबलेन भारतमभ्यषेणयत् । अथ सं प्रवृत्ते घोरे रणे प्रणतीर्थनिष्ठुणतापि सा न स्वीयामभिलाषां पूरितवतीति । अस्या गाथाया मूलमस्माकं पुराणे षूपलभ्यते । किमस्या निदानमित्येव दर्शयितुं लेखिनीव्यापारः क्रियते—

पुरा कैलाशगिरिशयौ पार्वतीपरमेश्वरौ भुवनमुपकर्त्तुं तस्मात् पर्वता दवतीर्णौ । पथि अनेका लावण्यवत्योऽप्सरसो विलोक्य मोहितात् शिवात् संक्रुद्धा शिवा कुशद्वीपमेत्य 'अग्निपर्वतरुहं शमीवृक्षमाश्रितवती । अस्यैव तरोरेकस्मिन् कोटरे चिरं स तपस्तेपे । दिष्ट्या प्रबुद्धेषु अग्निपर्वतेषु सर्वैजनैरभ्यर्थ्यमाना सा निजतपः प्रभावेन सर्वमपि वन्हिं शमीवृक्षे नियंत्रितवती स्वयमपि तत्रैव निवसितुं व्रतमाचरितवती । ततः प्रभृत्येव शमीवृक्षस्य पूजा संप्रवृत्तेति वदति पुराणगाथा । अत्रान्तरे महादेवोऽपि तृणाच्छादितं मुतकूलप्रदेशं श्रुत्वा तपः

सामर्थ्येन कुशादिकं ज्वालयितुं कपोतवेषः महोग्रं तपश्चेरे। अथ पार्वती निजपतिं कपोतरूपिणं श्रुत्वा स्वयमपि कपोती-भूत्वा तत्र गतवती। अथ संप्राप्ते काले सर्वमपि तृणादिकं जज्वले। सपत्नीको महादेवश्च कुशद्वीपं म्लेच्छै राक्रान्तमाकर्ण्य तानुद्दिधीर्षुरत्राजगाम। अत्र च महादेवः मोक्षेश्वरवेषः मोक्ष-स्थाने कृतवसतिः संजातः। कथ्यते कैश्चित् विमर्शकै 'र्यदत्र मक्कास्थानमेव कैश्चित् 'मोक्का, इतिलिख्यते तच्च नितरां संवदति' मोक्षस्थानेन।

इदमत्रावधेयम्—

पार्वती खलु शमीवृक्षे रमणात् शमीरमाख्यां प्राप्तवतीसा चासीरियादेशे सेमीरेमस नाम्नोपलभ्यते।

तस्या आक्रमणविषये चेत्याह पुराणम्—

महादेवगणेषु कश्चित् तस्य सेवकः महादेवं सन्तोषयितुं तपश्चरतिस्म। तस्यतपसा संप्रीतो शिवः। तं स्थावरपतिं कृत-वान्। सर्वाण्यपि स्थावराणि वस्तूनि तस्यैव वशं गतानि समभूवन्। स च निजशक्तिं देशान्तरेषु अपि प्रसारयितुं कुश-द्वीपमाक्रान्तवान्।

पार्वत्यपि देशस्याक्रान्तारं विलोक्य निजसैन्यं रणायोद्यतवती।

वलवान् खलु संवादोऽस्ति-असीरियाभारतीयवृत्तयाः। शमीरमा पुनः 'अस्खलन, स्थाने प्रादुर्भूदिति यथा पौराणिकाः

कथयन्ति तथैव 'असीरियस्य पुरावृत्तवेदी डाइडोरससिक्युलसः इत्थंव्याहरति' 'असीरयस्य राज्ञी (शमीरेमस) शमीरमायाः प्रादुर्भावः असकलन स्थाने समभूदिति' । गाथागतं मोत्तस्थानमेव 'मोक्के, ति जनैर्व्याहृतमिति वदति दबिस्तानग्रन्थकर्त्ता । ऐतिहासिकः टोलमीमहाशयोऽपि तस्यनाम' थोक्केति लिखति ।

पेटिन नामकः कश्चन् विद्वान् 'अरटोनियसपियसराज्ञः मुद्रा पट्टगतं लेखमुपजीव्य एवमकथयत्—

अतिपवित्रं विद्यते मोक्कस्थानम्, इदं च स्वनिर्मितनियमानुकूलमेव स्वात्मानं प्रशास्तीति ।

एतस्मात् वर्णनात् प्रतीयते 'यत् पुराणागतं मोत्तस्थानेमेव यच्चशिवस्यावतरणात् जनैः पवित्रममंस्यत' मोक्केति जनैः पश्चाद् गीयत ।

अयमत्र प्रश्नः केषांचित् मनस्सुजागरिष्वति यत् यथा पुराणे पार्वती परमेश्वरयोः कपोतेश्वरीकपोतेश्वर रूपेणोपलभ्यते तथैव कथञ्चास्माभिः 'अद्यश्वः मोत्तस्थाने कपोत चिन्हानि उपलभ्यन्ते येन वयं परस्परं सम्बन्धं कुर्वीमहि ।

# प्रतापचरितम् ।

## ( प्रथमोऽङ्कः )

ब्रह्माद्यैः सकलैः सुरासुरगणैर्योगीश्वरैश्चान्वहम् ।
यस्यानन्द सुधा विनिर्झररसः सामोदमास्वाद्यते ॥
यस्यानुग्रह दिव्यदृष्टि कणिका तृष्णाकुलाः स्मोवयम् ।
सोऽयं शं तनुतां भवत्परिषदि प्रत्यूहविध्वंसकः ॥ १ ॥

अपिच—

स्नेहासारसुधारसार्द्रमधुरां दृष्टिं क्षरन्तं बुधे ।
दीनांश्चापि दयेन्दुरश्मि शिशिरै राश्वासयन्तं करैः ॥
रोषोद्घूर्णित लोचनानलकुलै रुद्राभिधंपापिषु ।
भक्ति प्रेम भयान्वितेन मनसा ध्यायामहे तं प्रभुम् ॥ २ ॥

( नान्द्यन्ते )

सूत्रधारः—अलमति प्रसंगेन । अद्य खलु विजयदशम्याः प्रसंगे तत्र भवतः सर्वान्गुरुकुल वासिन आर्यमिश्रान्विज्ञपयामि-यदद्य समाज्ञापितोस्मि तत्र भवद्भिर्गुरुकुलाधिकारिभिः प्रताप चरितन्नाम नाटकं नाटयितुं । अस्ति खलु तत्र भवान्मधुपो नाम कविस्तस्यैवेयं कृतिः ।

अतः—

सरस्वती सच्चरणारविन्द मरन्द लुब्ध भ्रमरस्य तस्य ।
विलोकनीयः सरसः प्रबन्धस्तथा च हर्षः परिवृंहणीयः ॥३॥

( नैपथ्यम्प्रत्यवलोक्य )

मारिष ! नैपथ्य विधान मवसितं चेदित उपसर्पतु भवान् ।

( नेपथ्ये )

इत उपसर्पतु भवान्, इत उपसर्पतु भवान्।

सूत्रधारः—कोऽयन्मारिषाह्वानेन मे साहाय्य मापादयति।

( नाट्येन विलोक्य ) हन्तलोकैकवन्द्यः सतनयः श्रीमान्प्रताप-सिंहोऽय मित एवैति।

देशं विलोक्य यवनै र्विजितं समन्तात्।
धर्म निराश्रय मिवाऽवसितं च वीक्ष्य॥
आयाति रोष वहल स्फुरिताधरोष्ठः।
श्रीमान्प्रताप नृपति स्तनयानुयातः॥ ४॥

तद्योवन्मान्यानां पुरस्तादपसर्मामि।

( इति निष्क्रान्तः )

(प्रस्तावना)

( ततः प्रविशति पुत्रानुगतोराजा )

अमरसिंहः—( सखेदम् ) हा! हन्त हिमाचलादारभ्य आसमुद्र मिदानीं भारते यवनानामेवैकाधिपत्य मालोक्यते। हा!

दोधूयन्ते दिशिदिशि रिपूणा मिदानीम्पताकाः।
पूर्णाश्चाशा विजयमुखरै र्दुन्दुभीनां निनादैः॥
आर्याणाञ्च प्रथित यशसां नाद्यकुत्रापि राज्यम्।
वीक्ष्यै वैतत्तपति हृदयं ध्वंसते गात्रबन्धः॥ ५॥

राजा—वत्स नैवम्निराशयाऽत्मा विग्लापनीयः । भूयोऽप्यार्याणां विजयश्री रुद्भविष्यति ।

अमरसिंहः—( सावेशम् ) तात किमहमपगत चैतन्योऽस्मि यत् चित्तौड़पुर्या इमांदशामवलोक्यापिमे हृदयं न भिद्येत ।

राजा—आः चित्तौड चित्तौड ।

यस्यां पूर्वं सुचिर मुषितं नः पितॄणां सहस्रैः ।
कम्पन्तेस्म क्षितितल भुजो यां विलोक्यैव भूमौ ॥
कारागारे यवनपतयश्चाऽपि यस्यांन्यवात्सुः ।
म्लेच्छावासोभवति नितरामद्य तस्यांनगर्याम् ॥ ६ ॥

आः जीवितेष्वे वास्मासु म्लेच्छाश्चित्तौड पुरीं ध्वंसयन्ति, धर्म मन्दिराणि निपातयन्ति प्रतापश्च जीवति । नूनं स्वर्गताः पितरोऽस्मानुपालप्स्यन्ते । हे लौकेकनाथ । सनातनधर्मैक रक्षक !! जगत्पते !!!

शक्तिं प्रदेहि भगवन्मयि देवदेव ।
दिल्लीश्वरं भरतखण्ड विमाननोत्कम् ॥
सिंहासनात्किल यया भुविपातयेयम् ।
संस्थापयेम च ततः पुनरार्य राज्यम् ॥ ७ ॥

अमरसिंहः—तात परमिदानीं अकवरस्य राज्यश्रियं महती मनीकनीश्चालोक्य कदाचिदिद मध्यवसितुं दुष्करं स्यात् ।

राजा—( सावेशम् ) दुष्करमध्यवसितुम् । किं रामान्वयोद्भवस्यापि किञ्चिदध्यवसितुं दुष्करम् । सुगृहीतनामधेयानां लोकैकवीराणां वप्पारावल, हम्मीर, संग्रामसिंहादिनां वंशोद्भवस्यापि किञ्चिदध्यवसितुं दुष्करम् । वत्स ! नान्यथा ब्रवीमि नचा-

भिमन्ये यदि संग्राम सिंहमनु अहमुदपत्स्यम्, नहि राजपुत्र देशे कश्चिद्यवन हतकः पादमेकमपि न्यधास्यत्।

अमरः—सर्वं सुकरं तात पादानाम्। पर मिदानीं कुतः साहाय्यं लप्स्यते राजपुत्र देशीयै रपिनृपैः शत्रोर्दिल्लीश्वरस्य चरण द्वयं शिरोभिर्वन्दितम्। इदानीं सोऽकबरो भवन्तमेव चरणयो र्नमयितुं नक्तन्दिन मप्रयतते।

विजित्य सर्वं किल भारतन्नो, राज्ञश्च सर्वान्प्रणतान्विधाय।
भवन्त मालोक्य परं विपक्षे न जातुचिच्छान्ति मवाप्नुते सः ॥८॥

राजा—(सावेशम्) आः म्लेच्छ हतकः प्रतापन्नमयितु मिच्छति किं शिरीषकुसुममपि कुलिशं नमयितुम्प्रभवति। देवान् ब्राह्मणान्श्च नमयितुमभ्यस्त मिदं शिरो म्लेच्छराजानं प्रणमितुमेव न जानाति।

अमरसिंहः—तात इदानीमस्माकं मित्रबन्धु भ्रातृ व्यादयः सम्बन्धि नोपि जैत्रस्य म्लेच्छराजस्य छाया माश्रिता स्तत्कोन्योऽस्माक साहाय्य मापादयिष्यति।

राजा—वत्स नोस्माकं तेशो यवनराजेन जितः। नूनमर्थलुब्धै रस्म-द्भ्रातृभि रेव विजित्य स परकरयो रुपायनीकृतः

अमरः—सत्य मकृतात्मभिर्मानसिंहादिभिरेव भारतमातर मवधीर्य प्रत्यहं यवनश्रित्या मुखमुद्भास्यते।

राजा—यवनराजस्य का कथा, नाद्यावधि केनचिदपि रिपुणा स्वब-लेन भारतं स्वायत्तीकृतम्। अत्रत्यानां देशद्रोहिणा मति संधानेनैव ते पादमत्र प्रसारयितु मलमभूवन्। वत्स नालीकं ब्रवीमि यत्।

चिन्ताव्यस्तसिकन्दरस्य हृदयं यैः पूर्वमाश्वासितम्
यै गौरीय मुहम्मदस्य मनसः शूलं समुन्मूलितम्
यैर्बाबर्र बाबरोपि च पुरा चिन्ताम्बुधेरुद्धृत
स्तै रेवाद्यकलंकितैरकबरो दिल्लीश्वरः कारितः ॥ ६ ॥

अमरः—तात श्रूयते यत् यवन नृपतिरय मस्माक मार्याणा धर्ममनु-
मोदमानो वैदिकमाचार मप्यनुवर्तते। न चायमार्यानुपरु
णद्धि धर्म कृत्येषु। इत्थं च प्राचीनै राजभि रतितरां क्लेशिता
प्रकृतयोऽस्मिन् बद्धानुरागा इति।

राजा—वत्स सत्यमद्यतनीना आर्या रिपूणां पयोमुखै रेव विमोहित
विषदिग्धहृदयानि न परीक्षन्ते। धर्मानुरक्ताना मार्याणां धर्म
सहसा समुन्मूलयितुं यतमानानांप्राचीनानां यवन भूपती नाम
कृत कृत्य तामालोच्य यवनराजेनापर एव मार्गोऽवलम्बित।

अमरः—ननु कीदृशः सः।

राजा—अयनिशानी मार्याणां हृदयेषु प्रविश्य यवन धर्मम्प्रति तेष
घृणामपहृत्य आर्ययवनधर्मयोः समासेन नवीनं धर्म मे
प्रचारयितु म्प्रयतते।

अमरः—तात सम्भवति यत्कदाचिदयं परमार्थतस्तमेव धर्मंकल्या
करमनुमन्यते।

राजा—वत्स नैतेषां म्लेच्छ हतकानां वञ्चनादृते कश्चिदन्योधर्म
विशेषतोऽकबरस्य। नीत्युदन्वति निष्णातमतिरय मवैति
यत् यावद्भारते आर्य यवन धर्मयो द्वैधीभाव स्तावद्यव
श्रिया प्रत्यह मुत्कम्पमानचरणयुग्मं न सिंहासने निभृ
स्थास्यति। तामेव च स्थिरयितु मयं वञ्चना जालं प्रस
यति।

( नैपथ्ये )

भो भो अविनीताः पौरजानपदाः कथं न मां प्रणमत ननु न वेत्थ कोऽहमस्मीति ।

काम्बोजा विजितास्तु येन तरसा वंगाः कलिंगास्तथा
स्रस्यन्तेऽभिधयैव यस्य शिथिलास्त्रीणां तथामेखलाः
यस्यै वाति बली करै रकबरो दिल्लीश्वरः कारितः
तं पौरा विनता न मां प्रणमत त्रस्ताः रुधकिरुसृत्सुना ॥९॥

राजा—वत्स कोयमित एवायाति ।

अमरसिंह—भूयोऽपि शुक्तः स्वरव्यक्ति मुपलप्स्ये ।

(नैपथ्ये) पुनरपि "कांबोजा विजिता" इति पठति ।

अमरसिंह—(कर्णंदत्वा ) आः ज्ञातम् मानसिंहोयमित एवा याति ।

राजा—आः कुलकलंकोयस्मानसिंहइति । आः घृणितमिदं नामकर्णज्वरं मे समुत्पादयति । कर्णयोः शूलमिदं नामापि नाहं श्रोतु मिच्छामि दर्शनं तावद्दूरमास्ताम् अहं तावदपसर्पामि । अयमति थित्वेनागत इति शास्त्रदेशा त्वयैववास्या तिथ्यं विधेयम् ।

( इति निष्क्रान्तः )

( प्रताप सामन्तैः सह मानसिंहः प्रविश्य )

मानसिंह—युवराज नमस्तेऽस्तु

अमरसिंहः—महाराज यवन राज्यैककर्णधार नमस्ते । इदमासनमास्यताम् ( इत्यासन मादिशति )

मानसिंहः—( सक्रोधम् ) युवराज धृष्टाः पौर जानपदाः कुतो न मां प्रणमन्ति । आः पौरा न मां प्रणमन्ति जीवन्ति च महत् मे सहन शीलत्वम् ।

धावं धावं यं क्षितीशाः शिरोभि
र्नत्वा नत्वा मन्वते धन्यभागान्
धृष्टाः पौरा स्तन्न मां सन्नमन्ति
मूर्ध श्चाहं नैव कृन्तामि तेषाम् ॥ १० ॥

अमरसिंहः—( आत्मगतम् ) अहा साधु पौर जान पदाः साधु । नही दृशाः देशविद्रोहिणो म्लेच्छानां भृत्याः कदाचिन्नमस्याः ( प्रकाशम् ) महाराज अलं प्रकोपेन पौराः प्रायेण मूर्खा भवन्ति ।

मानसिंहः—भवद्वचनादेव रोषपनयामि, अन्यथाऽद्य एषां शिरां स्येव नाभविष्यन् ।

अमरः—( आत्मगतम् ) भूयो भूयोऽयं कुल कलंकः पौरानाक्षिपन् न पौरानवमन्यते, अपितु मेवाडाधिपतिं तातपादमप्यव जानाति भवतु तावदतिथिरय मिति मर्षयामि । ( प्रकाशम् ) ( द्वारं प्रत्यवलोक्य ) कोऽयं द्वारितिष्ठति

( प्रविश्य )

पुरुषः—अज्ञापयत्वार्यः

अमरः—उच्यतां पाकशालाध्यक्षो यत्सत्वर मेव भोजन मानयेत्

पुरुषः—यदाज्ञापयत्यार्यः

मानसिंहः—युवराज दक्षिण देशं विजित्य दिल्लीम्प्रत्यावर्ते। अत्र च मार्गे मेवाडाधीशं द्रष्टु मागतो स्मि

अमरः—( स्वागतम् साधिक्षेपम् ) आः एतादृशै र्देशविद्रोहिभिरेवास्माकं भारतं विजितम्। हा भूयोपि किं कदाचिद्भारतं स्ववशे आनीतम् स्यात्।

( प्रविश्य )

पुरुषः—आर्य आनीतम्

अमरः—( सहर्ष मात्मगतम् ) हन्त भारतं स्ववशे आनीतम्। किं दैव प्रकोपोऽपगतः। ( प्रकाशम् ) भद्र किमानीतम्

पुरुशः—आर्यादेशानुकूलं भोजन मानीतम्

अमरः—तत्परिवेश्यता मेतत् ( ससुवर्ण स्थालीषु परिवेशयति )

मानसिंहः—युवराज अहमत्र मेवाडाधीशं द्रष्टु मागतोस्मि तत्कुतः श्री मान्मामभि नन्दितुन्नागतः।

अमरः—महाराज अद्य तातः स्वस्थो नास्ति। शिरोवेदना तत्र भवन्तं राजानन्नाज्ञापयत्यत्रागन्तुम्

मानसिंहः—( सक्रोधम् ) हिन्दू पतेः शिरोवेदना वर्तत इति। आः युवराज नाहं वञ्चनीयः। आः अद्य प्रतापेन वञ्चितोस्मि ( इत्युत्तिष्ठति ) उच्यतामेवाड़ाधिपतिर्यदचिरादेगस्य विषमं फल मनुभविष्यसि

भोः कथ्यता मथ च मद्वचनात्स राजा
जानामि तावकमहं शिरसोऽर्ति हेतुम्
तश्चापनेतु मधुना भवताऽभिभूतो
दिल्लीं प्रयामि च तदौषधिमानयामि ॥ ११ ॥

मानसिंहः—(मानस्य करं गृहीत्वा) यवन सेनापते मयापूर्वं मभिहित यदद्य तातः शिरोवेदनाया असह्यत्वान्न समाशे आगन्तुमलम्।

मानसिंहः—युवराज अलमति विप्रलम्भनेन। प्रतापोऽस्मान् द्रष्टुमपि ना गन्तु शक्नोति।

( सहसा प्रविश्य )

पुरुषः—यवनराजसेनापते। महाराजो हिन्दूपतिः समादिशति।

कैंकर्यान्नहिलज्जितोऽतिघृणितो यो धर्म विद्रोहिणा-
माक्रान्तां जननीं विलोक्य रिपुभिर्यो नैव संखिद्यते।
लज्जाञ्चापि विहाय येन भगिनी म्लेच्छाय दत्ता पुरा
आर्याः मानधना स्तु तेन सहितं स्वप्ने पि नो भुञ्जते ॥१२॥

मानसिंहः—आः अभिमानिन् राजापसद प्रताप सर्वमपि ते नष्टम् तथापि ते गर्वः प्रत्यह मुपचीयत एव। इदानीन्तमेवोन्मूलयितुं दिल्लीम्प्रतिप्रयामि। ( किञ्चिच्चलति )

एक सामन्तः—( सक्रोधम् खड्ग मुद्यम्य ) आः पुरुषाधम महापात किन् कुल कलंक महाराज मधि क्षिपसि

विरम विरम साधि क्षेप वाचां प्रसारे
रसिरयमतितीक्ष्णो नैव तान्सोढुमीष्टे
अपवदसि नृपालं सूर्यवंशोद्भवन्तम्
भुवि पतति विदीर्णा ते न जिह्वा तथापि ॥ १३ ॥

( सहसा प्रविश्य प्रतापः )

प्रतापः—( सामन्तम्प्रति ) अलमल मति कोपेन ( मानम्प्रति ) श्रुतो भवद्भिर्मे सन्देशः, अभिधीयतां यदभिधीयते।

मानः—हे मेवाडाधिपते भवतामेव भूतये यैरस्माभिर्दिल्लीश्वराय भगिनीं दत्वा निजमानोऽप्युपेक्षितः त एव वय मद्य भवता बलवदपमानिता स्मः। इदानीं न कश्चिदप्यस्य प्रतीकार प्रकारोऽस्ति तथापि ते हितं वचो ब्रवीमि।

चिरन्तना स्ता विपदोऽवधूय,
सुखेन चे ज्जीवितु मिच्छसित्वम्।
स्वकीयमद्यैव विहाय मानम्,
दिल्लीश्वरस्यांघ्रियुगं भजस्व ॥ १४ ॥

नैवं चेत्करिष्यसि, स्मर्तव्यम्,

ममापमानोत्थितरोषवन्हि,
मेवाडदेशं क्षितिसाद्विधाय।
अभ्रंलिहाभिः शतशः शिखाभि-
र्भयावहाभिः परिधक्ष्यतीति ॥ १५ ॥

राजा—आः आप धिगस्तुते किं प्रतापः सुखेन जीवन मतिवाहयि समुत्पन्नः। न पश्यसि किम्।

विलपति रिपुदुर्गे संभृता मुक्तकंठम्,
रिपुभिरति नृशंसैः पीडिता मातृभूमिः।
व्यथयति किमुनैतत्कर्णयोः शूलवन्मे,
यदहमति कृतघ्नः सौख्य मास्वादयेयम् ॥ १६ ॥

अपि च रे क्षणमपि प्रतापो दास्ये स्थातुन्न जानाति।

मानसिंहः—रेरे प्रताप नेदानीन्त्वा म्मेवाडभूमिर्हृदये धारयिष्यति।
( द्वारिस्थित्वा सक्रोधं परिक्रम्य )

दर्पं ते खलु चूर्णयामि समरे आःमानसिंहोऽस्म्यहम्।
कालम्मामभिभूयसर्वजगता मद्यापि किं जीवसि।

प्रतापः—( मध्येएव ) किम्मुधा प्रलपसि।

द्रक्ष्याम स्तव शस्त्रसार, मधुना जल्पातिरेकैरलम्।
ये गर्जन्ति पयोधराः वहुतरं वर्षन्ति ते नावनौ॥ १७॥

( इतिमानसिंहो निष्क्रामति )

एकः सामन्तः—( निष्क्रामन्तम्मानम्प्रति ) मान! मान!! रणाजिरे म्लेच्छ हतकं भगिनीहर्तार मप्यानेष्यसीत्याशास्महे।

प्रतापः—( सर्वान्प्रति ) भो भोः सामन्ताः सर्वाणि परिधारितानि वस्त्राण्यपनीय उदकसागराम्भसि प्रक्षालनीयानि ( इति सर्वे वस्त्राण्यपाकुर्वन्ति )। इमानि सर्वाणि पात्राणि वहिर्नीत्वा शतधा विधेयानि ( इति पात्राणि वहिर्नीयन्ते नैपथ्ये च तेषां महान्शब्दः समुत्तिष्ठति )। किञ्च म्लेच्छ भृत्यस्य सम्पर्केण पवित्र मिदं गृहं सर्वतोपि शुद्धिमर्हति। धूपादिकञ्चानीय प्रज्वालनीयम्। ( तथा कुर्वन्ति )

किञ्च भो भोः सामन्ताः नाति चिरेणैव विपदामम्बुवाहाः सर्वतोपि मेवाड देशमाच्छादयिष्यन्तीति उद्घोष्यन्तां सन्नहनाय प्रतिनगरं, प्रतिप्रतोलीं, प्रति गृहं, प्रजावर्गाः।

दत्ताहुतिर्यवनभूपतिरोषवन्हिः,
संधुक्षितः खलु मया ज्वलिताऽचिरेण ।
तस्त्राधुना शमयितुं क्षतजप्रवाहै,
संगृह्यतां यवनशोणितशोण खड्गः ॥ १६ ॥

( सर्वेप्युत्थाय सबाहूत्क्षेपम् )

सर्वे सामन्ताः—आम् आम् हिन्दूपते सर्वेऽपिवयं धर्मदेशाय चात्मानं समर्पयितुं समुद्यताः स्मः । आगम्यतां सर्वत्रापि विद्युदिव नवीनमेव जीवनं सञ्चारयामः । ( इति सर्वे प्रोद्यत्खड्गा निष्क्रामन्ति )

( पटाक्षेपः )

प्रथमोङ्कः ।

---

# शक्तिमन्मनः ।

अयि वाचकाः !

मनो यद्यप्यणुमात्रं तथापि कियच्छक्तिमदद इति न तिरोहितं मनोविज्ञानजुषां विदुषाम् । न हि किमपीन्द्रियं, सदपि विग्रहे क्षणमपि कर्मातिवाहितुं क्षममन्तरेण मनः । किं बहुनाऽसदपि वस्तु सदिति भावयितुं शक्यत इति यत्तदशेषममुष्य मनस एवायं प्रभावः । तथा ह्येवमाख्यायते—

पातालदेशस्थः कोऽप्यतीव ख्यातो वीरवरश्चमूपतिः कदाचिद्विजयमुपलभ्य स्ववेश्माभिमुखं प्रत्यावर्तमानः समवर्तत । स हि वर्त्मनि किमपि पदमाससाद, यत्र तदम्बया तच्छैशवेऽसावानीयाभ्यधायितरां यत् "अपि भो ! सन्त्यत्र भूतानि अमुष्य पादपस्याधस्तात्तन्मात्र रोदीरन्यथा……" इत्यादि । एवमनुदिनं बाल्य एव मातुरमुष्य वचसो मनसि जनिततादृशसंस्कारोऽधुनावध्यपि न तद्भावं प्रतिजहाति । यद्यप्ययमिदानीं महतीं चमूमेकामधितिष्ठति, महच्चायुरापन्नः, अशेषेऽपि विषये तद्यशःपताका दोधूयन्ते-निखिलमपीदं वरीवर्ति, हन्त ! तथापि विधिनेदमनात्मनीनमाकलितं यद्यावदेवायं तदध आसदत् तावदेव ते प्रतीताः शैशवकालिका भीतिजाःस्मृतिसंस्कारा उदजागरिषुः । मनस्यसदपि भूतव्रजं विचारेष्वजनि । तत्समकालमेवासौ नयने निमील्य सभयान्तःकरणो हयमारूढश्चकित इव मूर्च्छितवृत्तिरिव समवातिष्ठत । परं मनसि गूढं प्रविष्टोऽयं भावस्तं तादृशमाक्रमत यत्किञ्चित्कालमन्वसौ हयमाश्रित एव पश्चात्त्वमाययौ भुवि च निपपात । वाजिस्तु तमित्थम्भूतं विरहय्यैतस्ततो हेषानादं विदधत्कथमपि नेदीयसमास्माकचमूपतिनिलयमाससाद । तदम्बयाऽलोकितं सचकितं 'किमिदमिति'

एष हि हयो ममैवौरसस्येति किममुष्य संवृत्तम्, क्वासौ प्रयातः, उपरतो वा यदयं तुरगोऽप्राटाख्यां विदधाति नामेत्येव नाना विचाराश्चेतश्चरत्वमभजन्।

सद्वेष चेतसः संस्कार एव तत्काले सङ्कल्परूपेण परिणतो योऽसावेतादृशं दृढीयांसमपि वसुपतिं प्राभावयत्। नाधुना चेयं वराकी जननी तत्त्ववबाच्छति किमिदं कथमिव च जातम्? किमन्यदमुष्याः स्वत एव निजकरकमलादपि तु वाक्सरोजान्नहि नहि वाग्दृषदस्तन्मनोभुवि बीजमुप्तमभवद्यत्तदा तत्समक्षं प्रतिफलितम्॥ मनसि ह्युप्तं बीजं संस्कारापरनाम काले २ फलं दर्शयति नियतं चैतत्संसाधितमेव तत्ववेतृभिः। कश्चिदपि हि संस्कारो न तु सर्वथा तिरोहति, संयोगविशेषन्त्ववाप्य यथावसरं प्रस्फुटत्येव। उक्तं तु केनापि महात्मना–'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' किञ्च 'मनसा कल्प्यते बन्धो मोक्षस्तेनैव कल्प्यते'। वस्तुतः सुखदुःखयोरयमेव हेतुर्यन्मनो नामातिशक्तिमत्तदेव च जीवनस्यापि धारकम्। इत्थं सन्मनःप्रग्रहः न नाम विज्ञायते केषु केषुचिज्जीवनाहितेषु वर्त्मसु सञ्चालयिष्यति नः। अहो चित्रं यदपि चिन्त्यते कथमिवासौ जनो यो मनोवदत्यणु वस्तु न वशीकर्तुं प्रभुस्तथापि वर्तत इदमेतादृशमेव। अतएव न वयमधिकारिणः शोचनस्य फलतः। कथमिव नाम स्वतःकृतस्य कृतेऽनुशयोऽनुभाव्यः। इदमेव वस्तु यन्मनुष्योऽधिकरोति यच्च यादृशे पथि चालयितुं वाञ्छेत्प्रभवति चालयितुमप्येकं हि वस्तु स्वाद्वस्वादूभयविधमपि फलं स्रष्टुं क्षमम्। प्राधान्येन यद्यपि पित्रोरिदं निक्षिप्तं पैतृका मातृका वा संस्कारा आजन्माप्यपाकर्तुं मनसो न सुकराः। तथा च तथ्यमेवैतद्यज्जनाः कर्मविशेषादुपरन्तुं जायन्तेऽक्षमा निर्दिशन्ति च पितरौ यदेतावेव इह हेतुकाविति तथा च प्रथितं कथानकमस्त्यपि यत्कश्चिद्गृ बालोऽतिरद्रिगृहे

प्रत्यहं 'दारिद्र्यं हि यथावसरं महान्त्येनांसि जनयतीतिकृत्वा' पाठशालातोऽपरेषां पुस्तकमसीपात्रलेखन्यादिकं मुषित्वा स्वजनन्यै प्रददाति। सा च तद्वस्तु विक्रीय किञ्चित्स्वनिर्वहणाय धनमुपार्जयत् एवं कालक्रमेणैष तस्य चौर्यभावो वृद्धिमवाप, सचाधुना राज्ञो वेश्म या वदपि चौर्यकर्माचरितुं सोहससम्पन्नः सम्पन्नः।

एकदा चैवं नृपवेश्मनि किमपि वस्तु मुष्णन्नु पालब्धः, पाशैश्च निगडितोऽयं कारागारमानीतः समेषां समक्षं हि तद्गले वध्यस्रगाबद्धु मुद्यतम्। तत्काले यदाऽयं पृष्टः "किं तवेष्टमिति' तदा स्वमात्रा मिलनमिति तेन प्रतियाचितम्। किमिति दृश्यते वार्ताव्याजेन कर्णमेव मातुरमुना दष्टम्। हा! नृशंसोऽयं बाल इति कृत्वाऽशेषैरप्यधिक्षिप्तम्—परं बाल ऊचे यदियमेव मह्यं चौर्यकर्म समुपादिशत् "यदि तु तत्काले मामियं न्यषेत्स्यदमुष्य कर्मणो नूनं नाद्याहमेतादृशशस्यं घातितोऽभविष्यम्। तद्बाल्योद्विन्यस्तैः संस्कारैरेव तादृशं मनो निर्मीयते, तथा च केनचित्पश्चिमदेशस्थतत्ववेत्रा सम्यगुपलक्षितं मनो यदिदं शुद्धं पट्टमिव बाल्ये भवति, यथा यथा ऽर्थाः अमीषां नाना ज्ञानं, सहवर्तिनां समीपवर्तिनां च संस्कारा इत्येतत्सर्वं यथायथं तत्राङ्कितं भवति तथा तथो तदशुद्धतामुपयातीति।

जगदीश्वरस्य निखिलशक्तिमतो ऽत्र चराचरात्मके विश्वस्मिन् विश्वे द्विधाश्चेतनाः प्राणिनः प्रविभक्ताः सन्ति। तत्र सन्ति तावदेके पशुपक्षिसरीसृपा येभ्यो न मतिः प्रदत्तास्ति—अपरे च जना येषां मतिःसम्भवति। स एष एवोपायः सुकरो मनोवृत्तीर्निरोद्धुम्। पशवो हि मनोवृत्तेर्विकासकाले न तां तिरोधातुं प्रभवो बुद्ध्यभावात्। तत्र चापरस्ताल् जनो हि ताः स्वज्ञानप्रभावेन तिरोधातुं सुसमीचीनं प्रभुः। यत्र हि तनो नः काचिद्दुष्प्रवृत्तिर्मनसो नयति, ततो ऽपावर्तनं श्रेयो

ऽन्यथा तदाधीन्येतु जनोऽयं स्वमानुष्यमेकपदे विजहाति । सङ्कल्पेनहि नियतं कार्य्यं सिद्ध्यति, साधनान्यपि चेतसस्ततः स्वत एवोपलब्धाः जायन्त इति वचनानुसारमिदमुचित मस्माकं यन्मनो यथा कथञ्चित्सुदृढी कृतं भवेत् । ततश्च मनो दुःसंस्कारेभ्यः सुरक्षितं यथा स्यादित्येतस्य सुकर उपायो ऽबलाभ्यो विद्यादानमेव । अस्य तावदन्ये सन्ति बहवो लाभास्तत्रायमपि यत्ते ते सौम्याः बाला न पशुमारं मरिष्यन्ति येऽद्यश्वोऽति दुःखमुपभुञ्जते । अयं खल्वन्याय एव यदशेषेभ्यः समा जगदीशप्रदत्ता विद्या, तथा परमात्मनस्ता अपि तनया वञ्चिता जायन्ते । विद्योपादानोपाये तु सति मातरोऽतीवोपयोगिन्यो भविष्यन्ति नः कृते ऽमुष्मिन् विषये च समाज सुधारकैरवश्यं यतनीयमितिशम् ॥

"किशोरः"

---

## उषाया नियमाः

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते- किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोप्यधिको यदस्यां धार्मिका गुरुकुल विषय काश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भवि ष्यति। येन मनागपि संस्कृतमवबुध्यमानानामर्थावबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।≈) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याङ्कस्य मूल्यं द्वावाणकौ ≈) सर्वथापि पत्रिका प्रेषणात्प्रा- गेव ग्राहकान्मूल्यं गृहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्या मभीप्सुभिः पत्रेण सह स्वयमेवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्र ग्राहकसंख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्यये यद्यस्माभिः सप्ताहद्वयं पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्र- बन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः। अयुक्तानि विज्ञ पनानि न जातु स्वीकरिष्यन्ते।

प्रबन्धकर्त्ता
"उषा"
गुरुकुल कांगड़ी
डा० शामपुर

# पुष्पाञ्जलिः ।

गुरुकुल विश्वविद्यालयस्य महाविद्यालयविभागे गुरुकुल वर्णिभिरेव निर्मितैका "संस्कृतोत्साहिनी" नाम सभास्ति यस्या उद्देश्यन्तु नाम्नैव स्फुटं भवति यत् संस्कृत भाषणे लेखने च वर्णिनामुत्साहवर्धनमिति तयैवसभयोत्साहवर्धनार्थं "संगीतपुष्पाञ्जलि" रिति नामधेयं पुस्तकं विरचितमस्ति यस्मिन् हि संस्कृतएव विविधच्छन्दोविभूषिताः प्रार्थनाविषयिण्यः सुरवाणिविषयकाः मातृभूमिविषयकाश्च बह्व्यः गीतिकाः सन्ति यच्च वर्णिभिर्जनानामुत्साह वर्धनार्थं विदुषांकरकमलेषु समर्पितमस्ति यदि च भवद्भिर्मृतभाषायां पुनरपि जीवनं संचारयितुमिष्यते तर्हि सर्वेषां संस्कृतानुरागिणां संस्कृतहितैषिणाश्चेदं कर्तव्यमस्ति यत्ते सार्द्धैकाणकाय वर्णिनामुत्साहवल्लीं न शोषयिष्यन्तीति यद्यपि शीघ्रतावशादशुद्धीनामपि सम्भावनास्ति यासां शनैः २ संशोधनं तु भविष्यत्येव यदि च जनैः सम्मानितो वर्णिभिर्विदुषांचरणकमलेषु समर्पितोऽयं पुष्पाञ्जलिः यदि च तेषांप्रयत्नः साफल्यं प्राप्स्यति तदाशास्महे यदग्रिमे वर्षे गुरुकुलमहोत्सवावसरएवद्वितीयः पुष्पाञ्जलिरपि भवतां करकमलेषु समागमिष्यतीति मूल्यंचास्य -)।। मात्रमस्ति ।

मन्त्री,  
संस्कृतोत्साहिनी सभा  
गुरुकुल विश्वविद्यालयः

*ओ३म्*

# उषा

संस्कृतमासिकपत्रिका

उषा अजीगर्भुवनानि विश्वा । ऋग्वेदे ।

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः ।
विगलतु जनतान्धकारलेशः, प्रसरतु देवगिरामुपादेशः ॥

| विषयसूची | पृष्ठाङ्कः |
| --- | --- |


कांगड़ी गुरुकुलयन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता प्रकाशिता च

*ओ३म्*

# उषा


| द्वितीये वर्षे | ... ......माघः...... ...<br>सं० १९७१ वि० | द्वितीयोऽङ्कः |
|---|---|---|


## प्रेम-मन्दाकिनी

देव देवेश, ते सर्वव्यापिन् ! सखे,
वयमत्रान्तरे, ध्यानमाशास्महे ।
सौख्यमुद्रा भवेद्, आत्मनो नो हरे !,
स्नेहमन्दाकिनी——पूरमीहामहे ॥ ध्रुवम् ॥

दीनदीना वयं, शक्तियुक्तो भवान्,
भृशमार्ता वयं, त्वां हि याचामहे ।
देहि धातर्, बलं कुरु दीने कृपां,
पाहि शरणागतम्, त्वामनूपास्महे ॥ १ ॥

प्रेमसिन्धु भवान्, मोहबद्धा वयं,
शान्तिमन्तर्गतां तव ध्यायामहे ।
पुष्पपुष्पे स्मलां भृङ्ग भृङ्गे मनो-
रमणीयां कलां शिव, स्मरामहे ॥ २ ॥

मोहमात्सर्यमद्, जगदन्धं भवद्,
तव भासो गलद्, दयनीयं हरे ॥
देहि दिव्यां प्रभां, दिवि भव्यां कलाम्,

चन्द्रशीर्णा निशि प्रतियाचामहे ॥ ३ ॥
देवदेव, प्रभो, शिव ! वन्धो ! सखे,
मातरन्तर्गतो ऽद्य इह ध्यामहे ?
पापपङ्के मनो मम लीनं प्रभो,
देहि दिव्यं वलं भवनाशाय हे ! ॥ ४ ॥
देव, वाला वयं सर्वजनको भवान्
तव वात्सल्यपूरे नु रमामहे ।
चित्तमेकं प्रभो, प्रेमलीनं विभो,
तव गाने यशो ननु भाषामहे ॥ ५ ॥
दिव्यदिव्यं सुधा-सम्रम्यं विभो,
महिमानं तव प्रति जानीमहे ।
देव देवश ते सर्वव्यापिन् समे,
वयमन्तान्तरे, ध्यानमाश्रास्महे ।
सौख्यमुद्रा भवेद् आत्मनो नो हरे,
स्नेहमन्दाकिनी—पूरमीहामहे ।

राजहंसः।

## नीडबन्धनम्

एकैकं तृणकाण्ड मत्र महतायासेन सर्वं दिनं
चिन्वंश्चञ्चुपुटेन चिन्तितसुखो नीडं न्यधामहम् ।
भिन्दानं श्रुतिगह्वरं वसुमतीं चोत्कम्पयन्तं स्वनै-
स्त्वां पश्यन् सपदि प्रभञ्जन, पुनर्भाग्यं न जाने निजम् ॥

श्रीविधुशेखर भट्टाचार्यः

# सम्पादकीया विचाराः

अस्माक मुषायाः पाठकाः शास्त्रीयविचारमपि सावधानतया शास्त्रालोचयितुम् प्रवर्त्तन्ते इति महान् नो हर्षः ।

हविषः पशोर्विभक्तिः—गतस्य कस्यचित् मासस्याङ्के पशु-शब्दस्य अन्नवाचित्वमवलोक्य ऐतरेयपशुविभक्तिमाशङ्क्य श्री हरिदास महाशयो लायलपुरस्थो ऽस्मभ्यम् परिहारं काङ्क्षति ।

वय मियत्पूर्वं ब्रूमहे यदेषां प्राचीनग्रन्थानां तादृशमेवाऽऽर्षं रूपं नाधुना ऽवशिष्यते । परमर्वाचीनैः कृता कालुष्यशबलता बहुत्राऽस्ति । अपरञ्च यत् क्वचित्किं,बहुत्र पशुशब्दो मनुष्यवाची अन्नवाची पुरोडाशवाचीत्यपि श्रूयते ।

वैद्यकशास्त्रस्य अमूल्यौषधयः पशुनामभिरेवाख्यायन्ते तेषामपि विशेषावयवा अस्मदादीनां विशेषाङ्गनामभिरेव श्रूयन्ते । त एव पुराकाले ऽपि गृह्यन्ते स्म । परमज्ञानवशाद् अयमेव सकलोप्यार्षव्यवहारः साधारणरूढिशब्द व्यवहारे संक्रान्त ईदृशरूपोऽभवत् । यथा पशुविभक्तिरेव तत्र निदर्शनायते ।

"......अथातः पशोर्विभक्तिः............हनूसजिह्वे प्रस्तोतुः श्येनं वक्ष उद्गातुः.........तस्याजिनं होतुः सर्वेषां वा" ॥ इत्यादि ।

अत्र आश्वलायन आह सत्रिणां धर्मेषु—

"सुत्यासु हविरुच्छिष्टभक्षा एव स्युः । धानाः करम्भः परिवापः पुरोडाशाः पयस्येति तेषां यद्यत्कामयेरँ स्तदुपविगुल्फयेयुः ।"

अत्र स्पष्टं धान्यमयं हविरस्ति । पक्षान्तरं दर्शयति अपि वेतिः—"अपि वा अन्यत्र सिद्धं गार्हपत्ये पुनरधिश्रित्योपव्रतयेरन् । अन्यान् वा पथ्यान् भक्षानामूलफलेभ्यः एतेन वर्त्तयेयुः ।"

उभयपक्षयोः प्रतिपादनशैली विवेचनीया। उभयमपि वाक्यं तिङन्तपदेनाऽवसीयते। अतः परं 'पशुना च' इत्यत्र चात्पशोः समुच्चयः क्रियते। अत्रैवाऽस्ति शंकनीयम्। इदं पशुनाचेति प्रक्षिप्तं प्रतीयते यदिपक्षान्तरमेवा श्वालायने नेप्सितं स्यात्तर्हि अन्योऽपि 'पक्षः अपि वा' इत्यनेन कुतो न दर्शितः। अथवा 'आमूलफलेभ्यः' इति मर्यादा कथं प्रदर्शिता। यदि पथ्य प्रतिपादनं प्रयोजनं चेदितरत्र पशुना चेतिमर्यादामतीत्याऽपथ्योपदेशे कथमिव युक्तियुक्तता सूत्रकर्त्तुराश्वलायनस्येति।

इम मेवाऽसम्बद्धं पशुमादाय सायनः पूर्वोक्तमैतरेय ग्रन्थं व्याचष्टे। यच्चैतरेयस्यात्मवचोभिः सह न संवदति।

ऐतरेय एव पशु शब्देन पुरोडाश इत्युच्यते नान्यत्।

"पुरुषं वै देवा पशुमालभन्त" इत्युपक्रम्य ऐतरेय ब्राह्मणमाहः—

"त एते उत्क्रान्तमेध्याः पशवः। तस्मादेतेषां नाश्नीयाद्। तमस्यामन्वगच्छत् सोऽनुगतो व्रीहिरभवत्:—" इत्यादि

अत्र एव च तेनैव यागो विहितः सकलं फलं तनुते इति प्रकरण एव धीमद्भि र्द्रष्टव्यम्।

मन्त्र संहितायां च—'घृतःपशुः पिष्टः श्चेति' द्विधापशुर्निरूप्यते। तैत्तरीये:—

"दधि मधुघृतमापो धाना भवन्ति। एतद्वै पशूनां रूपम्। पशवो वै पुरोडाशः इति" ( तै० सं० २. ३. २. ८. )

ऐतरेय एव पुरोडाशमयः पशुर्व्रीहिसम्पन्नोऽवयवश आख्यायतेः—

"सवा एष पशुरालभ्यते यत्पुरोडाशः। तस्य यानि किंशारूणि तानि रोमाणि। ये तुषाः सा त्वग्। ये फलीकरणाः तदसृग्। यत्पिष्टं किक्कसास्तन्मांसं। यत्किञ्चित्सारं तदस्थि। सर्वेषां वा एष पशूनां यजते यः पुरोडाशेन यजते तस्मादाहुः पुरोडाशसत्रं (१) लोक्यमिति।"

एवं प्रकारेण श्रुतिवचनाना मेकवाक्यतानिरूपणेन तत्वं प्रत्यक्षायते। नह्येकत्र शब्द विशेषोपादानेन भ्रमः कार्यः। परमनुशीलनात्स्वयमेव संगतिनिरूपणेन समाधानं विधेयम्। एवमन्यत्रापि तथैव विद्वद्भिः संयोज्यम्।

(१) चत्वारो वर्णाः लोकाः इति ब्राह्मणम्। तेभ्यो हितम् लोक्यम्।

# टिप्पण्यः

अशान्तः संसारः—वैज्ञानिकी उन्नति रधुना किमिव फलं प्रसूते । तदधुना प्रत्यक्ष मुपलक्ष्यते। केवलं मासपञ्चकं योरोपीय युद्धस्य गत म्। इयत्येव काले विंशति लक्षादप्यधिका जनसंख्या स्वर्गाद् गरीयसी मातृभूमिं विहाय न जाने कुत्र लोके गता ? मानवयोनिं च विहाय न जाने कां कां वा योनिमङ्गीकृतवती। इममेव परिपाकं विंशशताब्दी जनसमुदायं भोजयति। वस्तुतो नायं विज्ञानस्या ऽपराधः यदेष संसारः संह्रियते परमुपयोक्तृणामेव। यदेते शान्ति निरस्य समररणरणकं घोषयन्ति।

प्रायः क्षमा शक्तौ महती दुर्विभाव्या भवति। सति धने यथा भोग प्रसारः, सत्यां वाचि यथा जल्पालापः, अन्वरुद्धो भवति तथैव सति शक्तियुक्ते विज्ञाने ऽवश्यं तदुपयोगस्य चापलम्। यथा जर्मन कैसरेण प्रदर्शित मेव।

अस्माकं पुरातनानां समयेऽपि महत्या विज्ञानोन्नत्या अवश्य मीदृशी अवस्था समभूत्। दिव्यास्त्र संग्रहे संजाते किमर्जुनादयो वीरा महाभारतस्य महज्जन्यं नाऽयुध्यन्त ? इदमेव सर्वमपि समीच्या दशांऽवलोक्य मनुराह "महायन्त्राणि वर्जयेत्"

व्यापारहानिः—एभिर्महायन्त्रै रेकत्र पक्षे युद्धेषु महती जनसंख्या संहृता भवति, तथैव व्यापारेऽपि महती शिल्पिजन संख्या शिल्पशून्या भवति। सहैव च व्यापार शून्याऽपि भवति। देशस्य सकलमपि द्रविणं सर्वसाधारणस्य शिल्पिनः उपयोगं विहाय, व्यवसायपतीना मुदरदरीं पूरयति। सामान्यशिल्पिनस्तु हतश्रमाः हतव्यापारा अहर्निशम् दरिद्रान्तिततमाम्। अतः प्रायो देशे करकौशलं शनैः हीनतां याति। दैवयोगात् सहसाशिथिलितासु कलासु प्रायः तत्रत्याः कर्मकराः कौशलशून्याः सन्तः क्षुधार्त्ता म्रियन्ते। इत्यादयो बहवो अपायपरीपाकाः वैज्ञानिक कलाप्रयोगे भवन्ति अभूवँश्च।

युद्धसाहित्यम्ः—अस्माद् युद्धाद् वहवो लाभाः समभूवन् यथा वयं सर्वथैव वर्तमानहरिविर्षस्य नीति रीतिभि रनभिज्ञाः। अतःपरमधुना प्रायः शनैः २ सकलो ऽपि अभिजनः किञ्चित्परिचितो जातः। भाषायां तद्विषयकं साहित्यं नासीदधुनो तत्राऽपि सहसा प्रादुर्भूतम्। सर्वेषु समाचार पत्रेषु यत्किञ्चि त्प्रकरणमागतम्।

अधुना ऽपि पुस्तकानि वहूनि प्रकाश्यन्ते। मासिक पुस्तकानि अपि चित्रादिसम्पन्नानि नूतनशैल्या ऽविक्रियन्ते अस्मिन्नवसरे भाषापत्रसम्पादकानां महानुत्साहः सम्वृद्धो ऽजनि। दैनिक पत्राणि वहूनि जनिमागतानि। एवं भाषासाहित्यं क्रमश उन्नतिपथं त्वरितैः पदैः क्रामति।

परं संस्कृत साहित्यस्य का कथा? कि मस्यां भाषायामपि एतादृश उत्साहो जनिष्यते नवा। स्यात्कदा चित्कालान्तरे।

---

## दास्यम्

स्वामिन्! आदिश कार्यमेष भवतो भृत्योऽग्रतो वर्तते
कृत्वा पाणिपुटं समुत्सुकमना नन्वाननं वीक्षते।
यद्यप्येष न शक्नुयाद् गुरुतरं कर्तुं क्रिमप्युत्तमं
कुर्यात्लघ्वपि नून मुद्यमभरात् स्याच्चेत् प्रसादो मनाक्॥

श्री वि० शे० भट्टाचार्यः

# *भविष्यद्दृष्टि!

भावि परिणामः—युद्धस्यास्य महतो भयावहस्य कः परिणाम इति कश्चिदेव महान् भविष्यद्दर्शी पारदृश्वैव वेद ।

टालस्टाय महोदयो रूसप्रदेशालंकारभूत ऋषिरेव भविष्यन्तं स्वात्मनि वीक्षते ।

"नायं स्वप्नः । यतो हि बहुधा मया आत्मनो लेखनपट्टकस्य सविधं स्थीयमानेन ईदृग्विभ्रमवलोक्यते । सन्ध्यावेलायामपि बहुधा एव मेव प्रतीयते । किमयं भ्रमः अथवा भ्रमसदृशं किञ्चित् । नहि इदं तु प्रत्यक्षतरं ( तमम् ) । इदं तु दृश्यमाणं तरसा आलेख्यमिवार्पयितुं शक्यते । भावि नैसर्गिकघटनानामयमेवास्ति प्रत्यक्षः संक्रमः । तासा मध्यात्मिको वाह्यलेखाक्रमो मम नयनयोरुपसर्पतीव । मया मानवजाते र्भाग्य जलनिधे स्तले दृश्यते कापि अलौकिकी महतीं तनुं विभ्रती रूपलावण्यसमुदाया नव्यहावभावसमन्विता स्मयस्मितानना नानामणि मुक्ता जालोपबृंहिता रमणी तरन्तीं । सर्वा मानव्यो जातयोऽहमहमिकया तामादित्सन्त्यो ऽनुधावन्ति मोहलीनाः । साऽपि राजवेशवनितेव सर्वान्मोहयति । तस्याः कचलग्न मुक्तासु नाम भासते (१) 'व्यापारदेवीति' । साऽपि इन्द्रजालमारचयन्ती नून माकर्षतीव चेतांसि परं फलतो दारुणार्त्तिमेव सोष्यते। मलिनयातायातास्तस्या निश्वासाः। कनककठोरा धातुमयीव तस्या वाग् । तस्या वशमायातभ्यो विषप्रलेपा इव नयनविक्षेपाः सर्वेषां मरणाय कल्पिष्यन्ते ।

दृश्यन्ताम् तस्यास्त्रयो भीषणा वाहुदण्डाः सकलजगद्विभक्षया एव आत्तज्वालामयोल्मुकाः । प्रथमोऽयमुल्मुकः संग्राम सम्भारं प्रणिधत्ते ।

सैव मनोज्ञा रमणी समरं गृहाद् गृहं जनपदा जनपदं देशाद्देशं

(१) Commercialism

* IFromndian Opinion

नयति । देशप्रेम ज्वालामालामनुहुंकुरुते । परमन्ततः भुशुण्डीनां शतघ्नीनां महान् भीषणो नादः ।

अपरोव मुल्मुकोऽन्धविश्वासस्य वञ्चनामयस्य धर्माडम्बरस्य च। अयं मन्दिरेषु दीपान् ज्वालयति अयमेव इतस्ततो धर्मस्थलेषु भासते। अय मनृतस्यान्धविश्वासस्य वीजानि वपति। अयमेव वालमञ्चिकासु सुप्तानां वालानां मस्तकानि आमरणं भस्मसात्करोति ।

तृतीयो यमुल्मुकः शासननियमप्रपञ्चस्य । यः प्रथमं भीषणं कार्यं कुलध्वंसनं करोति ततश्च साहित्यस्य शिल्पकलायाः नीति कलायाश्च मूलं छिनत्ति ।

१९१२ ईस्वी प्रथमस्यो ल्मुकस्य कार्यसंपातः हरिवर्षस्य दक्षिण पूर्वस्यां प्रारप्स्यते । १९१३ तमे विध्वंस प्रारम्भः । सर्वोऽपि हरिवर्षो ज्वालावलीढ़ो रुधिराप्लुतश्च भविता । समराहतानामार्त्तचीत्काराः सम्प्रत्यपि कर्णकुहरं विशन्ति । १९१५ तमे एका विचित्रा मर्त्ति रुत्तरस्या दिशः समेष्यति। नवनयपोलियनवद् समररंगस्थलीं प्रवेक्ष्यति। सहि आघ्रात समरविद्योऽपि सम्पादककलानिपुणः १९२५ तम पर्यन्तं प्रायः सकलं हरिवर्षं स्वकरकमलच्छायायां स्थापयिष्यति। पुराणस्य जगत इतःपरं नवः कालः समेष्यति । जगति पुनर्जातीनां संयुक्तराज्यं स्थापितं भविष्यति। चतस्त्र एव महाजातयोऽवशिष्यन्ते आंग्लसक्सकसन्, लाटिन्, स्लाव, मोंगोलियन इत्येताः ।

१९२५ इतःपरम् धर्मविचारेषु परिवर्त्तन महमीक्षे । द्वितीयकर गता ज्वाला सकलमपि धर्ममन्दिरप्रपञ्चं लयं नेष्यति। धार्मिकोभावो नंक्ष्यति मानवं जीवन माचारहीनं स्थास्यति । ततः पुनरुदयो महतः संशोधकस्य । सहि एकेश्वरादि नानावादान् नाशयिष्यति । अद्वैतं ब्रह्मवादं च स्थापयिष्यति ।

ब्रह्मजीवात्मानावमृततांश्चैकत्र कर्मकाराग्निमराडले अभितप्य तदनु नवो त्यमाचारसमयः प्रादुर्भविता । सोऽयं संशोधको

मंगोलियनस्लावजातीयः । सच साम्प्रतमपि पृथ्वीमलंकरोति। सहि कर्मयोगी नाधुनाऽऽत्मनः परमात्मना ऽर्पितं कर्त्तव्यं वेद।

तृतीयेयं महती ज्वाला दग्धसकलकुलसमवाया। नाशित नीति शिल्प साहित्य कलाऽधुनाऽवलोक्यताम्।

अल्प स्थानं कदाचिदूल्मुक त्रयेण नावलीढं स्यात्। हरिवर्षस्य जातिषु पारस्परिकविरोधसहभूः समरोऽमरीकादेशस्य निर्धनाढ्ययोः कलहः, एशियाखण्डस्य परस्परं हिन्दुमुसल्मानयो विरोधश्च, अस्याः पूर्व मर्धशताब्द्याः यापयिष्यति। ततः परं १९५० तमे शिल्पसाहित्ययो रुन्नेतारं वीरवरं लाटिनवंशत उदयन्तं विभावयामि। तदनु व्यापारदेव्याः प्रशमो महाज्वालानाम्। आधुनिकैरादृतां विवाहरीतिं कविसम्प्रदायसम्मता प्रेममयी दाम्पत्यरीति र्विनाशयिष्यति स्वयञ्चाविर्भविष्यति। सर्वजातयः व्यापारदेवीं भ्रममयीं मंस्यन्ते। ततः सेनाप्रपञ्चस्य, धर्माडम्बरस्य, पतितस्य शिल्पकलाप्रचयस्य च नावश्यकता ऽनुभविष्यते जनैः। जीवनं विकसितं भविष्यति। मानसिकी शारीरिकी चोन्नति र्भवित्री।

अहो इदं याति नाटकमिव सकलं दृश्यम्।

स एवायं दार्शनिकस्य पारदृश्वनो रशियनऋषे स्टोलस्टॉयस्य भविष्यदालोकः सम्प्रति अस्माभिरबाधं नयनाभ्यां दृश्यते। अप्रतिहतं च कर्णाभ्यामा कर्ण्यते। वाचाचाविरतं समाचारपत्रेषु वाच्यते। किमधिकं, मनसाऽपि क्षणं क्षणमनु उत्कम्पितेन सकलं किल सत्यमिवानुभूयते।

प्राचीना वैहायसी गतिः—यद्यपि रामायणे ऽस्माभि र्बहुधा वैमानिकानां ख्यातिः पठ्यते तथापि तस्या रचनाप्रकारं नैव जानीमः।

ततो ऽर्वाचीनानां ज्ञानानुसारं किञ्चित्साधीय एव विधानमवलोकयामः यथाऽऽह उदयनः किरणावल्याम्:—

'वैहायसानां विमानादीनां धूमापूरित चर्मपुटकम्"। अत्र धूमापूरित चर्मपुटकस्य साहाय्येन आकाशमण्डलस्य वैमानिकानां कामचारं भ्रमणस्य अद्ययश्वः प्रादुर्भूतानां जैप्लिन प्रभतीना गगनगामिनां विहारेण सह संवादो बुद्धिपटल मारोहति।

बाणः कविरपि क्वचिदेकत्र गगन याने प्रयाणं कुर्वतः शिशुनाकस्य नृपते र्मरणमुल्लिखति।

एवं प्रचीनवैमानिकानां स्मृतिरपि न केवलं कल्पितकथानुमेयाऽपि तु साक्षाद्विग्रहवती यदा कदाचन वास्तविकी अभूदेव।

---

## धाराधरः

हे धाराधर, धारया तव महापृथ्वीय पात्राचिता,
स्रोतो दिक्षु विदिक्षु भैरवरवाद्व वेगेन संधावति।
चेतश्चित्रीयते तु मे विसदृशं किञ्चित् सखे पश्यतो,
यत् छिन्नं लवतोऽपि नो बिलमिदं ह्यङ्गुष्ठमात्रं मम॥

श्री विधुशेखर भट्टाचार्यः

# एडीसन महोदयः

## ( उद्धरणम् )

आंग्लभाषासाहित्यस्य सेविनामेकतम एडीसन महोदयो गत-सप्तदशशताब्द्यामभूत् । अस्य लघवः शिक्षाप्रदनिबन्धा बहुमूल्यं बिभ्रति । साहित्यसमालोचनाविषये ग्रथ्नन् स एवं ग्रथ्नातिः—

"अहमात्मनो निबन्ध मेकया कथया समापयामि । तया इदं सुस्पष्टं ज्ञास्यते कथमिव समालोचकाः साधवो गण्यन्ते । कश्चिदेकः प्रकाण्डसमालोचकः कस्यचित्पुरातनस्य कवेः काव्यस्य सकलानि दूषणानि सप्रमाणं समालोच्य, संगृह्य, पुस्तकीकृत्य, अपोलोनामधेयस्य दैवतस्य चरणयो रुपायनी चकार । सोपि देवस्तस्य महान्तमायासं विविच्य तस्याग्रे प्रत्यग्र संशोधितां गोधूमपूर्णां गोणी मधात् । उवाच च—भोः समालोचनाचतुर ! अस्य गोधूमस्य तुषानेकतो बीजानि चापरतो यथावधानं कुरु । सचापि हृष्ट एकैकैकश अन्नकणान्येकतः कृत्वा तुषानपरतश्चकार । अपोलोदेव ऊचे—भोः ! तुषसमूहं त्वं गृहाण, यतो हि अयमेवानुरूपः पारितोषिकस्तवाऽस्य महतः प्रयासस्य । सोऽपि आत्मकर्मनिन्दन्नताननः तुषानेव लज्जाकरान् शिरसि निधाय प्रचचाल । एव मेव च प्रायः समालोचका दोषेक्षणादिव्यचक्षुषः प्रतिविधान मुपलभन्ते । न हि तेषां दोषेक्षणेन क्वापि सत्वस्य हानिर्भवति ।"

दोष दर्शिनः समालोचकाः सन्तीति कार्यं न कर्त्तव्यमिति नास्ति मानवतां रीतिः । नहि मृगाः सन्ति, इति यवा नोप्यन्ते, याचकाः सन्ति, इति स्थाल्यो नाधिश्रियन्ते । अस्माकन्तु,—

> ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
> जानन्तु ते किमपि, तान् प्रति नैष यत्नः ॥

# प्रबोधनम्

अयि भारताऽऽशु भूयो गतगौरवं भजस्व।
विजहीहि मोहशय्यां वरबोधमाद्रियस्व। १

उदितो मरीचिमाली; तमिमं मुदा वहन्ती।
दिगियं विडौजसीया ललितं ललामभाले। २

जयपाणि रेयुषी ते परिबोधनाय धीमन्।
मधुरस्मितैर्नुदन्ती हसितैर्व्यनक्ति किञ्चित्। ३ ।युग्मम्

सहसा गतः प्रतीचीं मृगलाञ्छनः कलङ्की।
भजसे कुतो न संज्ञामयि ! जाग्रतिं श्रयस्व। ४

सहवासिन स्तवाऽमी सुचिराय जागरूकाः।
गतसंज्ञ मालुठन्तं प्रहसन्त्यहो भवन्तम्। ५

अहिफेनफेनिलोऽपि परिपाण्डुराननोऽपि।
गततन्द्र एव चीनः सुसखा सभाजयस्व। ६

शिथिलं तवाङ्गवर्गं परिलक्ष्य दुःखसन्धम्।
कथयन्ति हन्त केचिद् गतजीवनं भवन्तम्। ७

नृपधर्मकर्मठानि परमर्मशर्महाणि।
किमु तात, विस्मृतानि बुधचेष्टितानि तानि। ८

... ... ... ... ... ... ... ... ... ... ...
त्यज दैववादवेगं ननु पौरुषं श्रयस्व। ९

नहि निस्पृहोपकारो न दयाविना निमित्तम्।

आसीदतिशयप्रेक्ष्यः स राज्य श्री वधूवरः। रघु० ॥

इद मत्रान्यत् चित्रम्—

यत्रान्ये देशा वर्णनातिक्रमैरत्याचारैः रपरस्य देशस्य धनं प्रतारयन्ति तत्र भारतेन रेखा मात्र मपि धर्मपथाच्च्युतेन नापीति न कस्यापि विशयोऽस्ति। अयमेव पन्था व्यापारस्य यद्धर्म मार्ग माश्रित्यैव प्रवर्तनं नामेति।

अस्मादेव कारणात् भारते तस्मिन् समये धनाधिक्येऽपि न ते तेऽधर्माः प्रवृत्ता ये चाद्यत्वे दृश्यन्ते।

शीतांशुः

---

अत्र लेखे आगस्टसादीनां मुद्रा विषये ऽनुकरण मपि केवलं पाश्चात्याना माग्रह जनितमस्ति। वस्तुतो ऽनुकरणा वधारणे नकोऽपि हेतुः। ततोऽपि प्राचीनेषु ग्रन्थेषु मुद्रायाः दूरदेशे व्यापारस्य च प्रपञ्चः सुस्पष्टं समुपलभ्यते यच्चान्यदा यथावसरं दर्शयिष्यामः।

सम्पादकः

# मातृभुवम्प्रति प्रार्थना ।

योनो द्वेषत् पृथवि यः पृतन्यात्! योऽभिदासान्मनसा यो वधेन ।

तं नो भूमेरन्धय पूर्वकृत्वरि ॥

त्वयि जाता स्त्वयि चरन्ति मर्त्याः त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः।

तवेमे पृथिवि, पञ्च मानवाः येभ्यो ज्योतिरमृतम् मर्त्येभ्यः—

उद्यन्त्सूर्योरश्मिभिरातनोति ॥

यस्यां पूर्वे भूतकृत ऋषयो गामुदानृचुः ।
सानो भूमिरादिशतु यद्ध धनं कामयामहे ॥

यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलवाः ।
युध्यन्ते यस्या माक्रन्दो यस्यां वदति दुन्दुभिः ।

सानो भूमिः प्रणुदतां सपत्नान् असपन्तं मा पृथिवी कृणोतु ॥
जनं बिभ्रती बहुधा विवाचसं नाना धर्माणं पृथिवी यथौकसम्।
सहस्रं धारा द्रविणस्य मे दुहां ध्रुवेवधेनुरनपस्फुरन्तीम् ।

येग्रामायर शयंयासभा अधिभू भ्याम् ।
ये संग्रामाः समितय स्तेषु चा रुवदेमते ॥

(अथर्ववेदः १२ काण्ड० अ० १)

# अमात्यस्य उत्पत्तिः

## (२)

पूर्वस्मिन् अङ्केऽस्माभिश्चन्द्रगुप्तसमकालीनो मार्ग प्रक्रमः समीचीनतया प्रदर्शितः। अधुनाऽपि चाणक्य प्रणीतमर्थशास्त्र मालम्ब्यैव वय ममात्यस्य युक्तायुक्तविचारणां कुर्मः; मतिमतः कौटिल्यस्य का सम्मति रत्र विषये तथा चा स्माकं प्राचीनानां का सम्मति रिति।

"जानपदोऽभिजातः स्वव ग्रहः कृतशिल्पश्चक्ष स्मान्, प्राज्ञः, धारयिष्णु, दक्षो, वाग्मी, प्रगल्भः, प्रतिपत्तिमानुत्साप्रभावयक्तः क्लेशसहः, शुचिः मैत्रो, दृढभक्तिः, शीलबलारोग्यसत्वसंयुक्तः, स्तम्भचापलवर्जितः, वैराणमकर्त्ता इति अमात्य सम्पत्।" इदमेवामात्य स्वरूपं शतपथे ऐतरेये च पुरोहितप्रकरणे निर्दिश्यते।

सचामात्यः को भवेदित्यत्र बहूना माचार्याणां विसंवादो लक्ष्यते "सहाध्यायिनोऽमात्यान्कुर्वीत इति भारद्वाजो" मनुते यत स्तेषां शौचः सामर्थ्यञ्च दृष्टचरं भवति। त एव राज्ञी विश्वास्या भवन्ति

इतर आचार्यो विशालाक्षः नेत्याह 'सहक्रीड़ितत्वात्त राजानं परिभवन्ति अतः ये हि अस्य गुह्यसधर्माणस्तानमात्यान् कुर्वीत, समानशीलव्यसनत्वात्'

पराशरस्तमप्यपवदति 'साधारण एष दोषो' भवति यतो हि तेषामपि मर्मज्ञत्वाद्राज्ञो भयमेव। अतो "य एनमापत्सु प्राणाबाधयुक्तस्वनुगृह्णीयुः स्तानमात्यान् कुर्वीत" यतस्तेषामनुरागोऽपि दृष्टो भवति।

पिशुनाचार्यो, नेति प्राह। यतः अनुरागस्तु भक्तिपरिपाकः। ना बुद्धि गुणः अतो राजा "संख्यातार्थेषु-कर्मसु नियुक्ता ये यथाऽऽदिष्टमर्थं सविशेषं वा कुर्युस्ता नमात्यान्कुर्वीत" यतस्तेषामेव गुणो दृ

कौणपदन्तिराचार्यस्ततोऽपि न इत्याह। नहि बुद्धिगुण एव अमात्यत्वे मुख्यः। परं पूर्वनिर्दिष्टानां गुणानामपि आवश्यकताऽस्ति। अतः "पितृ पैतामहानमात्यान् कुर्वीत। तेहि एनमपचरन्तमपि न त्यजन्तिसगन्धत्वा त्। यथा अमानुषेष्वपि दृश्यते, गावोहि असगन्धं गोगण मतिक्रम्य सगन्धेष्वेवावतिष्ठन्ते इति"

वातव्याधि र्न इत्याह। यतस्ते सगन्धाः रोज्ञः "सर्वम वगृह्य स्वयं स्वामिवत्प्रचरिष्यन्ति तस्मान्नवीनानेवाऽमात्यान् कुर्वीत ते हि यमस्थाने दण्डधरं राजानं मन्यमाना च्युतिभयान्नापराध्यन्ति।"

बहुदन्तीपुत्र आचार्यस्तुअभिजन प्रज्ञाशौचार्या नुरागयुक्तानमात्यान् कुर्वीत इत्याह। यतः गुणप्रधानता हि अमात्यस्य यथार्थता।

कौटिल्यः सर्व मुपपन्नमित्याह। "कार्यसमर्थ्याद्धि पुरुषसामर्थ्यं कल्पते।"

एवं श्रीकौटिल्यः सकलं प्रतिपाद्य तेषाम मात्यानां गुण परीक्षामाह।

"तेषां जन पद मवग्रहं चाप्ततः परीक्षेत। समान विद्येभ्यः शिल्पं, शास्त्रं,चक्षु ष्मत्तां च। कर्मारम्भेषु प्रज्ञां, धारयिष्णुतां, दाक्ष्यं च। कथायोगेषु, वाग्मित्वं प्रागल्भ्यं, प्रतिभानवत्वंच। आपद्यु त्साह प्रभावौ,क्लेश सहत्वं,च।संव्यवहाराच्छौचं, मैत्रतां, दृढभक्तित्वञ्च। संवासिभ्यः शीलबला रोग्य सत्वयोगस्तम्भमचापलयञ्च। प्रत्यक्षतः संप्रियत्व, मवैरित्वञ्च।

एवं विध ममात्यमियद्भिः करणैः संपरीक्ष्य उपधाभिर्मनोमालिन्यं परीक्षेत। यदितथाऽपि शुचि सपन्नः स्यात् तदाऽमात्यान्संयोजयेत्।

सा उपधा चतुर्धा भवति

धर्मोपधा। अर्थोपधा। कामोपधा। भयोपधा च। सत्रिभिः यागादिषु संयोज्यामात्यं उपजापेनार्थोपधायां परीक्षेत। सेनापति द्वारा तेरैव याजिभिरुपजापेनार्थ लुब्धत्वमपि परीक्ष्यते। अन्तः पुर चारिकाभी राजमहिषीद्वारोपजापात्कामपरीक्षा क्रियते।

कापटिकद्वारा सर्वामात्यप्रतारण पूर्वकं राज्ञो विरुद्धया गुप्तमन्त्रणाया भय परीक्षा क्रियते।

एवं वै सुपरीक्षिता अमात्याः पुराकाले पितृ सन्निभं राजानमव लम्ब्य नानागुणसंम्पन्नाः प्रजाः पालयन्ति स्म।

## विश्वासतर्कौ

अत्रैते विषयाः प्रतिपाद्यन्ते संक्षेपतः

( i ) अनयोरर्थः ( ii ) तर्कस्य विश्वासव्यापित्वम् ( iii ) अनयोर्विरोधाविरोधौ ( iv ) उभयोः कस्याश्रयणम्।

1 असंशयं वस्तुस्वीकारो विश्वासः, यथा दध्नो विलोडनेन नवनीतोत्पत्तिर्जायत इति, यथाच परदेशं गतस्यानवलोकितेऽपि पयसि कूपाज्जलमानयेत्युक्तिस्तस्य कूपे जलसद्भावविश्वासबोधिका, अनात्र संशयांशोऽप्यवशिष्यते; अत्र, चातः सर्वेषामेव विश्वासः। अप्रत्यक्षे पुनर्वस्तुनि कस्यचिद्विश्वासःस्यात्कस्यचिन्नेति नात्रचित्रम् तत्रविश्वासवानसंशयालुः; संशयावृतचेता स्त्वविश्वासी

वस्तु निर्णयार्थं क्रियमाणो विचारस्तर्कः। ईश्वरोऽस्ति नवेत्यादावस्य विशेषतः प्रवृत्तिः।

ii उक्तलक्षणस्तर्को बहुत्र व्रजति। सर्वविधेऽपि विश्वासेऽस्य समावेशः। कश्चित्पुरुषः कस्माच्चि द्वणिजः किंचिद् वस्तु तन्मूल्यं तस्मै प्रदायाऽऽददाति। तत्र तयोः संवादे यद्वणिजा मूल्यं तत्पु-

रस्तात् स्थाप्यते तदेव तेन प्रमाणीक्रियते विश्वासश्चैवं भवति क्रेतुः। अत्रापि विश्वासे कारणं, तर्क एवो पलभ्यते। पुरुषो हि क्रेता द्वित्रा नापणनेत्य वस्तुमूल्यं निर्धारयति, येन तस्य तत्र विश्वासो जायते एवमत्र विश्वासार्थं तर्कमाश्रयन्ति आबालवृद्धा जनाः। बालोऽपि पि- त्रा मधुरमेलाशर्करासंवलितं जलमिदमास्वादये त्युच्यमानः पूर्वोक्ता स्तदुक्तीःसत्यरूपाः स्मृत्वा तत्र विश्वसिति अत्रापि तर्काश्रयो लक्ष्यते

एवं शिवालये केनचिदानीतः स्वतनयः, अत्र पादयो र्निपत, एत ते ऽमङ्गलं नाशयिष्यति, अयं पार्वतीनन्दनो गणेशः सर्वविघ्नापहारी, अस्यच ठाकुरस्य ह्योऽजनि प्रादुर्भावः ,, इत्युच्यमानः पितुर्हितचि- न्तकता मनसि निधाय झटिति तत्र विश्वसितीत्यत्रापि विश्वासे तर्को- पलब्धिं वयं मन्यामहे बालकोहि,,गृहं गच्छ, तत्र त्वदर्थं रक्षितानि पक्वा म्रफलानि सन्ति,तान्यास्वादये त्येवं ,,पूर्वमुक्तः एत मर्थ मनुसरन् पि- तरं सत्यवाचमजानात्। एवंच तेन मन्दिर गतेन विचार्य्यते यदनेनो च्यते तत्सत्यं भवती दमपि तथा स्या दित्येवं रूपं तर्कमाश्रित्य तत्र विश्वसिति।

किंच केन चिद् युक्त्या पराजितोऽपि कश्चित् स्वपराजयं मनसा स्वीकुर्वन्नपि युक्तिपथे प्रचलितुं नितान्तमक्षमोऽपि तर्काश्रयवि- श्वासवानेवास्ति। अत्र युक्त्या पराजयकारणात्तर्क मनालम्ब्यैव त विश्वास इति कैश्चिदभ्युपगम्यते। परमत्रास्माभिः पृच्छ्यते कुतस्तस्य विश्वासः क्षयं नोपयाति? विश्वासोऽपि कुतोऽजनि? कारणमिहाप्तोप देशरूपः। पूर्वस्मिन्वयसि क्रियमाणस्तर्कविशेषएव नः प्रतिभाति अत्रोपा त्तविश्वासोदाहरणेऽपि तर्कोपलब्धिः। यथा— इदं दधि नवनीतवत् दधित्वात्, ह्योदिने दृष्टदधिवत्। अयंकूपोजलवान्कूपत्वा- त् मथुरादृष्टकूपवत् इत्येव मनुमियैवप्रवृत्तिर्लक्ष्यते प्रवर्त्तकस्य।

एवं चतत्रापितर्कसरवम्। तर्काधारंजगदिदम, सर्वत्रापि विश्वा- से तर्कोपलब्धिः घटमृदिव विश्वासे तर्कोपलम्भः।

iii एवं सति कुतोऽनयोर्विरोधः स्यात्। नह्याधाराधेयभावमाप न्नयो विरोधः कुत्र चिद दृष्टः नच कुम्भोदकयोर्विरोधः कस्यचित्कर्ण पुटातिथीभूतः। एवमत्रापि विश्वासे तर्कोऽस्माभिः पूर्व मुपपादि-

तः। तर्क माश्रित्य विश्वासो भवत्येवंरीत्या न विरोधः।

यदि तर्केण आप्तप्रमाणपूर्वको विचारो न गृह्येत, केवलं युक्तया युक्त विचार एवोपादीयेत तर्हियस्य तु यदाह तर्कस्तत्रैव विश्वासो न तस्य विश्वासतर्कयोर्विरोधः। यत्रच न तर्कस्य मार्गो नचापि विश्वासस्य कुतस्तरां तत्र विरोधः। यथा "अम्लजनाख्यो वायुर्नसरलः पदार्थः। अत्र नेदं तर्केण साध्यते नच कस्याप्यत्र विश्वासः, अतोऽत्राप्यविरोधः।

यत्र युक्तया किंचिदन्यत्स्यात् विश्वासश्चतद्भिन्नः स्यात् तत्र विरोधः कथं चिदङ्गीकार्य्यः। एवंच नहि कुत्रचिद् वस्त्वपि स्यात् तदभावोऽपि स्यात् इति हेतोः क्वचित्तमःप्रकाशवदनयोर्विरुद्धस्वभावो लक्ष्यते।

iv युक्तया विचारमनाश्रित्य कस्य चित् क्वचित्प्रवृत्तिर्न साध्वीः। नच पूर्वै रभिहित मित्येवं रूपेण तर्केण विश्वासो विधेयः। उक्तं च यथा कविकुल गुरुणा

,,पुराणमित्येव न साधु सर्वं नचापिसर्वं नवमित्यवद्यम्"

अतः किंकार्य्यं कृतिनेत्याहाग्रे

"सन्तःपरीक्ष्यान्यतरद् भजन्ते मूढःपरप्रत्ययनेयबुद्धिः"

अपरं प्रत्येकं जनेन न परीक्षा साधुतया शक्यते विधातुम्। प्रत्यक्षे हि विषये ऽनुमानं कुर्वतां केचिद्धेत्वाभासान् प्रयुञ्जीरन्। किंच विलोक्यन्ते ऽपि एकस्मिन्विषये विंशति विधाः सम्मतयः। तत्रैकैवस्यात्तथ्यरूपा तदितराःप्रमाणानर्हाः।एकमन्तरेण सर्वेषा मपरेषां हेतवश्च हेत्वाभासाः। एवं सति तर्कस्या प्रामाण्यं स्यात्। नोचेदव्यवस्था स्यात् यावन्तो मनुष्या स्तावन्त स्तर्काः प्रादुर्भवेयु रेकस्मिन्वस्तुनि।

सत्यप्येवं तर्कस्त्ववश्यमुपादेयः। परमत्रेदमालोच्यम् न्यूनाधिक तथ्य भावेन स्थितस्य ज्ञानस्य कुत्र चिन्नितान्तंमिथ्यारूपेणावस्थितिरस्ति नवा अस्तीति तावद् वदामः, वेदा हि सत्यं ज्ञानम्। अतस्तर्केण वस्त्ववगच्छद्भि र्वेदानुकूल एव तर्क आश्रयणीयो येनानर्थो न स्यात्।तर्केण चनिर्णीते वस्तुनि विश्वासः, नतु तर्कमन्तरेण विश्वासः कार्य्यः यथाचाह मनु—

'यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः।'

अमरः

# भारति भावय सुन्दरवेशम्-

१ नवलनवलचलदलिकुलमालागुञ्जनचारुविषेशम् ।
सुरभितकविकुलकलामसूनै रचयामस्तव शेखरशेषम् ॥

२ अनिमिषलोचनललितविकासै रिन्दीवरकृतहासम् ।
भवतु भवे भवदाननमेतत् सकलकलाकरदेशम् ॥

३ अतिशयमधुररसावलिबहुलं बुधकमलाकरमूलम् ।
तरुणारुणकरनिकरनिभः संसरतु तवापि निदेशः ॥

४ करवरवदरसदृशमिह निखिलं भवति यदागमवशतः ।
पुनरपि ते गुणमणिगणगरिमा विशतु जनालिनिवेशम् ॥

५ नवसाहित्यसुधामृदुमन्दिरसुन्दरचंकुरचन्दरितम् ।
हरतु सदाजनपातकपुञ्जं तव कर कमलं भवक्लेशम् ॥

६ करुणामसृणाकटाक्षनिपातै रिहकुवलयदलनीलैः ।
मृदुबुधमधुकरमनसि विकासय शुभसंकल्पमशेषम् ।

७ रुचिर चरितमिदमथ नहि रसना प्रभवति कथियतुमखिलम् ।
वर्णनमिषचटुलायितजिह्वा तव करुणायितलेशम् ॥

श्रीवत्सः

---

( १ )चंकुरः=समूहः

## परा प्रीतिः

वेगादूर्ध्वमनन्तमम्बरममी शक्त्याऽवगाह्य क्षणं
अन्त्या हन्त परापतन्ति पतगा मूका विमूढा यथा।
इत्थं यत्र महीयसामपि मतिर्गत्वा परावर्तते
तस्मिन् क्वापि परात्परे प्रियतरे चित्तं परिप्रीयताम्॥

## आश्वासनम्

भावाम्भोधि मुदीरयन्ननयन् न्न् पीयूषवर्ष स्रुति
चित्तं चित्तवतां सपद्यपहरन् कर्णं समुत्कर्णयन्
तापं क्वापि विलापयन्न पनयन् स्वप्नं च कश्चिद् द्रुतं
अव्यो मे श्रयणीय हे ननु कदा श्वास प्रदस्ते स्वरः॥

## कृषि

तावन्तं दिवसं तथा श्रममविश्रामं विधायोत्कटं
क्षेत्रं यत् परिकर्षणेन परमोत्कर्षावहं संस्कृतम्।
भ्रातः कृषक पश्यतः खलु सपद्य तत् पुनः साम्प्रतं
नानाकण्टकवल्लिगुल्मनिवहा च्छन्नं खिलं प्रागिव

———

नोप्तं बीज मुपार्जितं तत इतो रात्रिदिवं भिक्षया
सिक्तं नापि च खातया बत तया दीर्घप्रणाल्याम्भसः।
प्रत्याशा प्रचुरं फलं प्रति महत्यासीन्मुधैवेह ते
मन्ये शून्य महो निकेतनमिदं शून्यं सदा वत्स्यति

श्री विधुशेखरो भट्टाचार्यः।

# उषायाः नियमाः

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते- किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोप्यधिको यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति। येन मनागपि संस्कृतमवबुध्यमानानाम् र्थावबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्धरुप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।≈) त्रैमासिकं च। मूल्यमष्टावाणकाः ॥) एकस्याङ्कस्य मूल्यं द्वावाणकौ ≈) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं गृहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्या मभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्र ग्राहकसंख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्य्यये यद्यस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः। अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते।

प्रबन्धकर्त्ता
उषा
गुरुकुल कांगड़ी
डा० शामपुर

Registered Number A. 655.



*ओ३म्*

# उषा

## संस्कृतमासिकपत्रिका

उषा अजीगर्भुवनानि विश्वा । ऋ वेदे ।

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः ।
वि गलतु जनतान्धकारलेशः, प्रसरतु देवगिरामुषाविशेषः ॥

| विषयसूची | पृष्ठाङ्कः | यसूची | पृष्ठाङ्क |
|---|---|---|---|
| ईश प्रार्थना ... ... | ५० | भगवदभ्यर्थनम् | ६५ |
| सम्पादकीया विचाराः ... | २७ | मातुरभ्यर्थना | ६७ |
| टिप्पण्यः ... ... ... | ३५ | अमात्यस्य उत्पत्तिः | ६६ |
| कुलयशोगीतम्... ... | ७५ | ईशस्तवः | ६९ |
| उपयुक्तपरी । ... ... ... | ५८ | महाकविभारविः... | ७० |
| भारतीय व्यापार... ... | ६२ | सेल्ट जातिः | ७२ |

कांगड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता प्रकाशिता च

*ओ३म्*

# उषा

द्वितीये वर्षे ... ......फाल्गुनः...... ... तृतीयोऽङ्कः
सं० १९७१ वि०

## ईश प्रार्थना

अयि भक्तवत्सल ! चित्स्वरूप!
दयोदयेन दयस्व नः ॥ ध्रुवम् ॥
कनकप्रभावलितोरुण स्तव,
दीप्रदीप्तिमणीयति ।
प्रचुरप्रभामयदिव्यभास-
सनाथितान्नु विधेहि नः ॥
अखिलानगाधभवार्णवे,
पतितान् प्रभो ! दयते भवान् ॥
अनुकम्पया कलुषाकुलान्,
विमलानदार ! कुरुष्व नः ॥
सकलं जगन् ननु लीलया-
भ्रमितं त्वयाऽखिलशक्तिमन् !।
बलहीनदीनजनान इमान्
प्रभुवर्य ! शक्तिमतः कुरु ॥
सकलान्तरात्मनि तत्व विद्,
मधुरं निषिञ्चति षा भवान् ।
कृपया ऽधुना सकलानिमान,
सुहृदो दयासरिता ऽद्य नः ॥

# सम्पादकीया विचाराः

**उपवासादि व्रतानि**—अस्माकं भारतीयधार्मिकसाम्प्रदायिकैः प्रायो ऽनशनव्रतेन महद्देषोच्चमासनं लब्धम् । प्राय एकादश्यामुपवासस्तु स्वर्गादिलोकान्तरप्राप्तिनिबन्धनम् भवति इति सनातनी धार्मिकी प्रतिपत्तिरस्ति। बहवस्तु नवीनाः न कथमपि उपवासादिकं सत्यालम्बनं मन्वते परमिदमपि अन्धविश्वासादि फलमेवेति मुहुर्मुहु र्घोषयन्ति। ऐभि रेव हेतुभिः सनातनधर्मावलम्बिनः सर्वेऽपि नव्यसभ्यतामस्य धर्मैकदेशस्योद्ध्वंसने सशंका नितरामाक्रोशन्ति। किं तत्वमिति को वेद। स्वर्गस्य परोक्षत्वान् नापि मानसिको विश्वास एव स्थिरायते सनातन धर्माभिमानवन्तो ऽपि पुराणादिसम्मतां प्राचीनां रीति मेव प्रमाणयन्ति इति तत्वतो निरूपणमपि तद्धर्ममनालम्बमानस्या प्रमाण मिव सिद्धयति । अस्तु किमपि स्यात्। वयं तु नेदं तत्वमवधारयामः। वयम् यद्यपि उपवासव्रततपश्चरणादि पक्षपातिनः स्मः पर माधुनिकपुराणसम्मतां प्रणालीं प्रचलितामापाततो निन्दामहे यतो हि प्राचीनै ग्रन्थैः सह तेषां भूयस्तरां विसंवादो दृश्यते।

वेदब्राह्मणेषु च तेषां तादृशप्रतिपादितस्यानुपलब्धेश्च ॥
अधुना ऽवसरे वयमुपवासादिविषये प्राचीनां प्रणालीं प्राचीन

पुस्तकेभ्यो व्यवस्थापयितुमीहामहे ।

तत्राह महाभारतम्:—

युधिष्ठिर उवाच—

यदिदं तप इत्याहुरुपवासं पृथग् जनाः ।
एतत्तपो महाराज उताहो किं तपो भवेत् ? ॥

भीष्म उवाचः—

मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।
आत्मतन्त्रोपघातस्तु न तपस्तत्सतां मतम् ॥
त्यागश्च सन्ततिश्चैव शिष्यते तप उत्तमम् ।
सदोपवासी स भवेद् ब्रह्मचारी सदा भवेत् ॥
मुनिश्च स्यात्सदा विप्रो दैवतश्च सदा भवेत् ॥
कुटुम्बिको धर्मकामः सदाऽस्वप्नश्च भारत ।
अमांसादी सदा च स्यात् देवता ऽतिथिपूजकः ॥
विघसाशी सदा च स्यात् सदा चैवाऽतिथिव्रतः ।
श्रद्धधानः सदा च स्यात् दैवतद्विजपूजकः ॥

उपरोक्त उद्धरणे अनशनादितपसस्तु तपोरूपत्वं सर्वथैवाऽपास्तं श्रीमता पितामहेन । परं सोऽयमुपवासो नाधुना ऽऽत्मघातादतिरिच्यते । न स सतां मान्यास्पदम् । सत्यं तपस्तु दानविनयाभ्या मेव गुणाभ्यामवसीयते ।

गृहस्थिनां धर्मं कुर्वाणो भीष्मः पुरो ऽपि नित्यकर्माणि व्याचष्टे । सदोपवासीति । परमस्मिन्ग्रन्थे तु उपवासब्रह्मचर्यामृताशनविघसाशनादयः शब्दा गृहस्थेभ्यः कथमुपयुज्यन्ते ! कथं च क्रियायां परिणम्यन्ते ! इत्येव नो मनसि चिन्ता जागरूकायते । किं यज्ञमन्तरा ऽपि विघसो दृश्यते किं देवलोकमन्तरा ऽपि अमृतस्याशा उत सकलमपि उदयन वचोऽनुसृत्य ह्रासविपाकवत कलिमपेत्य लुप्तमेव । वयमग्रे ऽनुसन्धानं विदध्मः-

तत्रव महाभारतेः—

„युधिष्ठिर उवाचः—
कथं सदोपवासी स्याद् ब्रह्मचारी कथं भवेत् ।
विघसाशी कथं च स्यात् सदा चैवा ऽतिथिव्रतः ॥

अस्य समाधानं चिकीर्षतो भीष्मस्य वचांसि नितरां रमणीयानि सर्वेऽपि भारतवासतव्यैः प्राचीनसःरतापन्नातिभि निष्पक्षपात

मवधान पटले समारोप्य हृदि अङ्कनीयानि । यतः कथमपि शङ्कालवोऽपि नावशिष्येत ।।

तत्राह भवान् भीष्मः पितामहः

"अन्तरा प्रातराशं च सायमाशं तथैव च

सदोपवासी स भवेद् यो न भुङ्क्तेऽन्तरा पुनः ॥"

अर्थात् प्रातः सायमुभयकालयो गृहीतयो भोजनयोरन्तराले ऽशन ग्रहणाभाव एव उपवास उच्यते ।

"भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति वै द्विजः । "

ऋतवादी भवेन्नित्यं ज्ञाननित्यश्च यो नरः ॥

न भक्षयेद् वृथामांसम मांसाशी भवत्यपि ॥

दाननित्यः पवित्रश्चाऽस्वप्नश्चैव दिवा ऽस्वपन् ॥"

दिवामास्वाप्सीरित्यादीनामेव ब्रह्मचर्यनियमानां गृहस्थेऽपि प्रतिपत्ते र्द्विजस्यै वंविधं ब्रह्मचर्यमुपपद्यते ।

भूयश्च,—"भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा नरः

अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठर ॥"

एवं हि अमृतभोजनमपि धर्माङ्गेष्वेवमाचर्यत इति उपपन्नं वचः । अधुना विघसाशित्वमुच्यते—

"देवताभ्यः पितृभ्यश्च भृत्येभ्यो ऽतिथिभिः सह

अवशिष्टन्तु योऽश्नाति तमाहु विंघसाशिनम् "

इत्येवं वयं प्राचीन प्रणालीनां सत्स्वरूपं स्पष्टतया प्राचीन व्यवहार ग्रन्थेषु भूयोभूयः पठामः । तत्राऽपि देवतानिर्णयो ऽतिथिनिर्णयः पितृनिर्णयश्चावशिष्यते । तत्राऽपि वैमत्य मेवास्माकमिदानीन्तनेभ्यो विश्वाससमूहेभ्यः । तदपि वय मन्यदा कदाचित् सोपपत्तिं निरूपयिष्यामः । अत्राऽपि शङ्काजातं वयं भूयोपि शास्त्रानुशीलनेन निराकर्तुं प्रयतिष्यामहे ।

अत्र दृष्यत एव सर्वैरपि धर्मपिपासुभि धर्मचर्चायां भागादानम् । वयं सर्वेऽपि गतमत्सराः सन्तः परिगलित हृदयकालिमानःसत्य जिज्ञासया धर्मनिर्णयमिच्छाम ईहामहे च ।

# टिप्पण्यः

गण्डस्योपरि स्फोटः — उन्नतिशिखरं यियासन्त्या सभ्यतया वैज्ञानिक म्महज्जन्यश्चोद्वोधयन्त्या चण्डीदेव्या सकलमपि वसुधातल वास्तव्यं जगद् भीषणै र्दानवदैत्यसमैः शतघ्न्यादियन्त्रैः संहार क्षमैश्चाग्नेय गोलकै रुत्पतन शालिभिश्च महद्भि र्विमान सम्भारै श्चाकुलीकृतम् । महती जनसंख्या पुत्रकलत्रादिबान्धवानामलौकिकं प्रेम विहाय पारस्परिककलहव्यसनोपशमनान्धा मनो वपुश्च नितरां जर्जरयति । अहो घोरे ऽस्मिन्नपायमये महत्यप

रोऽपि न विधातुर्दारुणप्रकोपस्य सीमा।

सम्प्रत्येव गते मासि महानय मिटलीप्रदेशे धारणीकम्पः समजनि, यत्र १२००० मिता जना असून् जहुः, २०००० मिताः जना तनुव्यथां मानसव्यथाञ्चानुभूय जीवनचिन्तां कुर्वन्ति । अयमिटली देशः स्वात्मानमुदासीनतया स्थापयति। परमेतावता ऽपि किम्। यदि विधाता न प्रसादं गच्छति युद्धं भवतु मात्रा भवतु जनानां रोद्रोप निपातस्तु ललाटपटले ऽङ्कितो मार्ष्टुं न शक्यते।

अतः परं न जाने काऽन्या दृशी दैवी घटना जना पहारं कामयते नात्र विधातुर पराधः जनानामेव सुकृते तराणि एवं फलानि जनयन्तीति आर्षं मतम्।

तिरश्चांव्यक्ता वाक्—अस्माभि र्गते किस्मिंश्च दङ्के उषाया स्तिरश्चां व्यक्तां वाचमुद्दिश्य किमपि व्यन्यासि- अयमपरः प्रबलो दृष्टान्तो ऽस्माभिरनायासमुपालाभि। महाराष्ट्र भाषाया नवयुग इत्याख्ये पत्र एकस्य शुनो विषये विचित्रा कथा सत्या प्रमाणिकसूत्रैः सम्बद्धा उपलब्धा।

अमेरीकाप्रदेशे एका महिला ऽध्यापककर्माऽऽचरन्ती शिष्या

नध्यापयन्नास्ते। शिष्याश्च गणितादिविषयाणां पाठमधिगच्छन्ति। समीप एव च राल्फ इत्याख्यो गृहे पालितः सारमेय स्तिष्ठति।

अध्यापिका चैकदा पाठं विच्छिद्य कुकुरं सावधान मभिमुख मवलोकयन्तं विलोक्य जिज्ञासुमिवा कलय्य प्रप्रच्छ तमेव।

द्वौद्वौ कति? सोऽपि कालतभावा निजकरो त्थापनेन चतुः कृत्वा दर्शयामास। एवमेव स कुक्करो बहुधा पृष्टोऽपि समवाना न्येव साधूनिउत्तराणि वितरीतु न चस्खाल।

साचाऽध्यापिका तं सारमेयं पिपठिषुमिवा कलय्याधिवर्णफलकं वर्ण विन्यास पुरःसर मध्यापयितु वर्णानभिज्ञापयितु पदानि क्रमशः परिचाययितु मुपचक्रमे। सोऽपि स्वकीयं भावमालस्योप युक्तं शब्द मौचित्यज्ञान बोधनार्थं मक्षरशोऽधि वर्णफलकं विज्ञापयति स्म ।

अध्यापिकां स बालकुक्क रो मातरमिवम न्यते स्म। बालकवद्देवविचित्रां घटनां ज्ञातुकामो मातरमञ्चलाकर्षणचरणविलेखनादिविधिभिरपृच्छदेव। यच्चाप्यकथयन्माता तदपि आकर्ण्य श्रुतधर इव मनसि अवदधौ।

तस्य विषये तत्रत्यपशुविज्ञानसंस्थया ऽपि बहु निरीक्षितं परीक्षितम्। परं सर्वत्रैव वस्तुतः परीक्षामुत्ततार। एको दर्शकस्तमवलोक्य लिखितपठितन्तं कुकुकुरं मत्वा तन्नाम्ना एकं पत्रं लिलेख यद्भवान्पठितुं जाना त्मम च सारमेय शिशुर्न जानातिपठितुमिति। सचापि पत्रं वाचयि त्वानिम्न लिखितेषु पदेषूत्तरयामास

"Dear picK come to mother to learn too, good bye Rolf"

इदंसत्यं वृतान्तमुपलभ्य वयमपि चकितास्मः।

सभ्यता शब्दः—आंग्लभाषायाः Civlisationशब्द आधुनिकैः सभ्यता शब्देनानूद्यते यश्च वस्तुतो न तथानुवादमर्हति। तत्र विम्ह

श्यते धात्वर्थमनुरुद्ध्य रूढिपर्यन्तम्। उपरोक्त आंग्लभाषाशब्दः civil इत्य स्मान्मूलशब्दतः प्रादुर्भवति यस्य साधारणो ऽर्थः जन समूहसम्बन्धि इति। प्रायः सर्वसाधारण पौरवासिभ्य एवास्य शब्दस्य प्रयोगः। सेनाविभागादन्यत्रा ऽयं शब्दः सम्बद्ध्यते। अस्मादेव शब्दात्प्रादुर्भवन्ति रूपाणि civility साध्वाचारः शिष्टता इत्यर्थः। civill-enginier यः धूमयानादीनां शिल्पाध्यक्षः। civism सन्नागरिकता civi war नागरिकाणां मेव परस्परं युद्धःcivil laws पौरेभ्यो राजनियमा इत्येतानि रूपाणि प्रादुर्भवन्ति। अस्मादेव चायं नामधातुः Civilise इत्यपि भवति यस्यार्थो जांगलिकता परिहाणं, इतएवोप लक्ष्यमाणं रूपं civiliasstion सिविलिजेशन इति भवति यस्यार्थो जांगलिजतामुक्तानामवस्था। अर्थात् यत्र शिक्षाद्युन्नति परिष्कृता पौराणां दशा सिवलाइजेशानशब्दस्य निष्कृष्टार्थः। परं सभ्यशब्दस्य अन्यथैवीप्रतिपत्तिः समाऽऽभा कान्ति यस्यां सासभा। न सा सभा यत्र न सन्तिवृद्धाइत्यदिना च तस्या श्चसभाया सत्वात् विद्यावृद्धजनशोभितो प्राकृतजनानां संघः सभा। यत्रसर्वेषां समाना प्रतिष्ठा न कस्यापि मानहानिरित्यर्थः। रूढ़ितस्तु सभा संसत् परिषद् इत्यनर्थान्तरम्।

तस्यां विद्वज्जनसभायां साधु व्यवहारे भाषणेच यः, स सभ्यः तस्या, ऽसाधरणो धर्मः सभ्यता अर्थात शिष्टविद्वज्जननामाचारव्यवहारः सभ्यता इतिनिष्कर्षः। इयं सभ्यता प्राकृतानां पुरवासिना माचारतोसर्वथा भिद्यते। इत्येव सभ्यता शब्देन तस्या नुवादो न सर्वथा समीचीनः। सभायां प्रकाश्यमाना सभ्यता न कथमपि अस्माभिः सिविलाईजेशन शब्देन वक्तुं पार्यते। तस्यानुवा दस्तुना गरि कत। इत्येव भवितव्यः। अथवा पौर प्रकृतिरिति वा अल्पस्य कृते बहुहानमस्माकं नितरां मूढधीत्वं द्योतयति। वैपश्चित्यं तु यथार्हशब्दान्तरप्रयोग एव। तदत्र प्रयोक्तारो ऽवश्यं विमर्शमवधारयिष्यन्ति।

**वैयक्तिकं धनम्ः**—यच्च यस्यधनमधिकृतं भवति तदेवतस्यवैयक्तिकमित्युच्यते। यथा गृहं स्वोपार्जितं द्रविणं वा। यच्च सामान्यम्भवति तत्र सर्वेषामधिकारो यथानद्याः जलं वायुश्च। परमधुना नवीन सभ्यता ऽऽगमनसमकालमेव स्वार्थ प्रपञ्चो ऽतितरां भयावहं रूपमातनोति। सामुद्रिक व्यापारतः प्रसिद्धिमापन्ने भारते सर्वोपि सागरो ऽनधिकृत इवा सीत्। सर्वोऽपि जनो यथेच्छं समुद्रे व्यापारमर्वाश्चालयितुं स्वतन्त्रो ऽभवत्। परमधुना सकलो ऽपि सागरविस्तरो व्यापारवृद्धिः शक्तिवृद्धिश्च स्वायत्तीकृतः। तत्रा ऽपि देशानामात्मीयधन इव ममताप्रत्ययो वलवानस्ति।परमस्य स्वार्थस्य नायमेवं सीमा। अतः परं चाधुना वायु मण्डमपि विभागमापन्नम्। यतोहि इदानीं तत्राऽपि वायुयानादि साधनैरावागमनं प्रवृत्तम् तस्याऽपि स्वायत्तीकरणमेव आत्मवश प्रदर्शनार्थ मिष्यते।

अतएवोदासीनानां हालेण्डप्रभृतीनां यदि उपरिष्टान्निस्सरन्ति जर्मनाद्यनुदासीननभोयानानि तद्वास्तव्यानां हृदि शूलमुपजनयन्ति। अहो स्वार्थपरम्परा

इटली भूकम्पस्य विषयेऽयमपि समाचार उपलब्धो यदत्र ४०००० मिता जना हताः २०००० मि तास्तु असूनेव जहुः। फिसानो सरस्या निकटवार्त्तिनो विंशतिर्जनपदा भूमिसादभूवन् एतावन्त एवान्येऽपि महतीं जनस्यगृहसमूहस्यच हानिम न्वभवन्।

वस्तुतो., यद्धात्रा लिखितं ललाटपटले तन्मार्जितुं कः क्षमः"

अथवा—

पारस्परिक कलहे महतीं व्यथामनुभवत्सु सत्सु सकलहरिवर्षदेशभ्रातृषु अन्येषा मुदासीनवदासनं नकथमपि युज्यते अतो धात्रा कदाचिदेतेषामपि जनक्षय एवमेव सम्मतोऽ जनि इति उत्पश्यामः। अन्यैरपि उदासीनायमानै रवश्यमीदृशात् कालस्य शापाद्भेतव्यमेव।

# कुलयशोगीतम् ।

सित कान्तिकान्तरुचो यशोऽत्र कुलस्य नः किल गीयताम् ।

तदमेयसौरभसञ्चयश्चकितै र्जनैश्च निपीयताम् ॥ ध्रुवम् ॥

यदसम्भवं जगतीतले प्रकृतिस्वराज्यसमाकुले ।

इह तस्य धर्मकलापते रुदयो न केन महीयताम् ॥ १ ॥

विमलार्यरक्तमहाम्बुगा परिषिक्तमेतदथो कुलम् ।

फलपुष्पभूतिसमन्वितं विदितं कदापिन हीयताम् ॥ २ ॥

कुलपादपोद्भववर्णिभिः कुसुमैरिवोत्तमवर्णिभिः ।

चिरकालसञ्चितसौरभैः सकलं जगत्किल जीयताम् ॥ ३ ॥

तपसा कृते ऽथगवां कृते कुलवर्णिभिः कुलपावनैः ।

नरमेधयज्ञविधिक्रमे स्वतनो र्बलिः किल दीयताम् ॥४ ॥

कुलमेत देकमनुत्तमं गुरुपूर्व मर्चित दैवतम् ।

प्रति वत्सरं प्रतिवासरं जयमङ्गलाध्वनिनीयताम् ॥ ५ ॥

जगतां कृता महसाम्भृता प्रभविष्णुना ऽतिसहिष्णुना ।

नइदं कुलं किल विष्णुना परमोदयाध्वनि नीयताम् ॥ ६

# उपयुक्तपरीक्षा

अस्माभिः प्रकरण द्वयं पाठकानां रुच्यनुकूलं अर्थशास्त्रा दुद्धृत्य किञ्चि दालोचन पुरःसरं पूर्वमेव प्रमाणितमधुना तमेवा ऽर्थ शास्त्र माश्रित्य कथमिव कार्यं नियोज्यम् नास्य पुरुषस्य परीक्षा विधीयते कथमिव तस्य गुणानामालोचनं क्रियते केगुणा आवश्यका केच दोषा नेष्यन्ते इति विविच्यते। यद्यपि तच्छास्त्रं राजशासनस्य कृते वस्तुत उपयुक्तं परं राजकीयं शासनमपि मनुष्यस्य कार्य सीमानं नोत्क्रामति मनुष्य गुण दोषापेक्षमेव तस्या पिवर्तन मितिहेतो सर्व कार्येषु कौशलमपि समानान्गुणानेवापेक्षन्ते।

"अमा त्यस्यास्प दोपेताः सर्वाध्यक्षाः शक्तितःकर्मसुनियोज्याः" अर्थाद् यथा ऽस्माभि पूर्वत्राऽङ्के अमात्यस्य गुणा वलीप्रदर्शिता-सैवगुणा वली नियुक्तस्या ऽध्यक्षस्याऽपि इष्मते। यथा,, जानपदो ऽभिजातः स्ववग्रहः कृत शिल्प श्चक्षुष्मान् प्राज्ञो धारयिष्णु र्वग्मी शुचि र्दक्षः प्रगल्भः प्रतिपत्तिमान् उत्साहप्रभाव युक्तः क्लेश सहः शुचिः मैत्रः दृढ़भक्तिः शीलवलारोग्यसत्वसंयुक्तः स्तम्भचापल्यवर्जित संप्रियो वैराण मकर्ता"इत्यमात्यसंपत्"

एव परीक्षाप्रकारो ऽपि प्राक् प्रदर्शितः यथा,, प्रत्यक्षपरोक्षानुमेया हिराज वृत्तिः" स्वयं दृष्टं प्रत्यक्षं परोपदिष्टं परोक्षम् कर्म-सुकृतेनाकृतावेक्षण मनुमेयम्। अतएव नियोजको ऽधिष्ठाता "कर्मसु चैषां नित्यं परीक्षा कारयेत्" कुतः! यतोहि प्रायो जना अनिय त चित्ताः भवन्ति कदाचिदेषां कालक्रमेण चित्तविपर्यासे सति द्रोह बुद्धि न उत्पद्यताम्। ,, अश्वसधर्माणोहि मनुष्या नियुक्ताः कर्मसु विकुर्वते.,।

"तस्मात् कर्तारं देशं कालं कार्य प्रक्षेप मुदयं चैषु कार्येषुविद्यात् ते कार्यकर्त्तारः परस्परमसंहता अन्योन्य कर्मसु हस्तादिक्षेपं नाचरन्त अविहीतापरित्यक्तद्वेषभावा कर्माणिकुर्युः।

आज्ञापालन मेव योक्तु र्नियुक्तस्यच श्वः श्रेय साय भवति। संघातश्चपरस्परं कदाचि त्स्वामिनं प्रतिद्रोह बुद्धिं जनये दत

एव आह कौटिल्यः "संहताः भक्षयेयुः"। द्वेष मापन्नै षु नियुक्तेषु का र्य विनाशः। प्रवन्धस्य चविनाश अतएवाह। "विगृहीता विनाशये युः"।

अतएव नियमितास्ते कर्त्तारःस्वामिन मनिवेद्य किञ्चिदपि का र्यस्यारम्भं नकुर्युः। आपत्प्रतीकारादिकं विशेषमेवावश्यक प्र तिपाद्य स्यावसरं वर्जयित्वा। तत्राऽपिस्वातन्त्र्यं खलु स्वामिनो म भक्त्यतिशयं व्यनक्ति अतो न भयावसरः।

तमेव प्रवन्धं शासन भयंवा परिरीत्तिकाः प्रमादस्थानेषु चैषा मत्ययं धनदण्डं "जुर्माना" इत्याख्यं स्थापयेयुः। कियन्मात्रमितिचेद्दि स्य वेतन व्ययस्यद्विगुणम्"।

अपरत्र यथा संन्दे शं कुर्वतो जनस्यतु स्थानमाना बुभौ लभ न्ते। अधुना अध्यक्षा स्त्रिविधाभवन्ति

अल्पायति रढपव्ययो यथायति व्ययश्च। अल्पायतिमहाव्ययो ति इति राज्ञो ऽवश्यधनं भक्षयति यथायति व्ययश्च नभक्षय तिभवप्राचीनानांमतम्।

परं कौटिल्यस्य मते तु वित्तभक्षणस्य विषयो गूढ़प्रणिधि भिन्नेयो भवति

अतोऽल्पायतेः द्विविधकारणं सस्वयं राजधनं स्तेयवद्भक्षयती त्येकम् अथव योग्यतयाहीन तया अल्पमेवा यतिं लभे मतेति द्विये तीयम्। तत्रयथार्हशासनम् भवति।

अधिकायते रल्प व्ययस्यचापि द्वैविध्यम्। कारणमस्ययत्सरवय मादातुं स प्रजां निष्पीड्य द्विगुणं धनमु त्पादयन्ति इत्येकम्, अपरश्च राज नृद्धैयव सधनंवलादपकर्षति। धनस्य प्रजा एव मूल- मिति हेतो प्रजाया वलादपकर्षकीत [illegible]

वराजा प्रशस्यते ।

अधुना तृतीयः समायतिव्यय स्तादृशा ऽपि नेष्यति आयव्ययौ समौ इत्यस्या यमभिप्रायो यत्पुरुषार्थस्यफलंनोत्पद्यते । इत्यतः पुरुष कमणां मूल्यनिर्वहणार्थं समायव्ययकार्येऽपि नसाधु स्तस्यैव कुर्वतः आयति भक्षणस्या शंका उपजायते । सोऽपि यथापराधं दण्ड वितरणेन पथि प्रयोज्यः

"तस्मा दस्य राज्ञो नियो क्तुर्यो यस्मि न्नधिकरणे शासनस्थ स्त स्यकर्मणः सा राजा याथा तथ्य माय व्ययौ च समासेन व्यासेन चा चक्षीत ।"

तत्रापि विभुक्तस्यपरिहार स्त्रिभिः कारणैः क्रियेत ।

मूलहरत्वात् तदात्विकत्वाद् कदर्यत्वाच्चं ।

यः पितृपैतामहन्धनमन्यायेन भक्षयति स मूलहरः । स आत्मनो वंशस्य मूलमेधोच्छिनत्ति । एवंचा चरतोजनोदेशस्य सम्पत्तिं विनाशयति ।अपरमेभ्यश्चविर्गान मुदाहरणपुराक रोतिद्वितीयश्च योय यदुत्पादयातेतत्त द्भक्षयति,सतादात्विक उच्यते एतादृशोऽपि न नियोक्तव्यः एतादृशे ऽधिकारिणिक्षति देशस्यराष्ट्रस्यस्वस्य वा व्यवसायस्य धन समृद्धिर्न जायते । तृतीयो भृत्या त्मपीडाभ्या मुपचि नोत्यर्थंस कदर्य उच्यते एतादृये ऽधिकारिणि देशस्य दारिद्र्यम् स्व वंशस्यादारिद्र्यम भृत्याना मुद्वेगो ऽधिकारिणश्चस्वात्मानमहर्छेन्यमि त्येताः परिणा माभवन्ति ।

तथा ऽप्ययं तृतीयो यदि मित्र बन्धुसमूहेनासौ हार्दं प्रपन्नस्य स्वेनोपादेयः यदि एका की तदोपादेयः एव आद्ये ऽवाधं सुगुप्तं च धवनास्या पगमप्रति षेधो भवति । द्वितीये तु भत्याना मुचित तया चकार्य कुर्वन्ति ।

कदर्येऽध्यक्षे संप्रवन्धातुं तस्यकार्य त्रयंराजाऽवेक्षेत कश्चित्स्व येश्नतिसद्रव्यादिकं संनिधत्ते । कदाचि त्पौर जान पदानां गृहेषु अयमिधत्ते कालेन स्वामिनेरिक्मा ... दद्यान्ः प्रजायाश्चवल

देशं विहाय परदेशे द्रव्यमन्त्रादि गो प्यवस्तुनो परस्य देशे अवस्त्रा वयेत्। इत्येवं त्रिप्रकारकस्यापि अध्यक्षस्य सुनियमेन नियमायितुं तस्यामित्रसत्रि मन्त्रि भत्यबन्धुपक्षम् गतिश्चागतिश्चद्रव्याणा मुप लभेत''

यश्चा परस्य देशेस श्चारंकुर्यात् तमनुप्रविश्य मन्त्रं विद्यात्। सुविदिते मन्त्रे शत्रुशासनापदे शनैव धनं घातयेत्।

अत एवाऽस्याः संख्यायकादयोनानाध्यक्षाः कार्याणि कुर्युः अस्य महतः प्रवन्धस्या यमेवाभिप्रायो यत् न केनापिहेतुना प्रजाया, धन व्यर्थतां गच्छेत्। एत दर्थंच बहुमुख्यमनित्यं चाधिकरणं स्थाप येत्। अर्थात्। अध्यक्षानां स्थानपरिवर्तन मत्यावश्यकम्। अयमेवा भिप्राय ,वदली' इत्यास्य भवति।

प्रायः शासने नियुक्ता कार्यकर्तारः धनलुब्धाः भवन्त्वेव

यथा आचार्य आह

यथा ह्यनास्वादयितुं न शक्यं
जिह्वातलस्थं मधुना विषं वा।

अर्थस्तथा ह्यर्थचरेण राज्ञः
स्वल्पोऽप्यनास्वादयितुं नशक्यम्, ॥
मत्स्या यथान्तः सलिले चरन्तो
ज्ञातुं नशक्याः लिलं पिवन्तः।
युक्तास्तथा कार्य विधौ नियुक्ताः
ज्ञातुं न शक्या स धनमाददानाः ॥
अपि शक्या। गति ज्ञातुं पततांखेपति तत्रिणाम्।
नतु प्रच्छन्नभावानाम् युक्तानां चरतां गगिः ॥

आस्मा वये श्चोपचितान विपर्यस्येच्च कर्मसु।
यथानभक्ष यन्त्यर्थं भक्षितंनिर्वमन्ति वा ॥

नभक्षयन्ति येत्वर्थान्यायतो वर्धयिन्ति च।
नित्याधिकाराः कार्यास्ते राज्ञः प्रिय हिते रताः

# ( भारतीय व्यापारः )

अयि भावुका वाचकाः— ( २ )

कथं रोमक प्रदेशो भारतीयां समृद्धिमाददानः समुन्नति सोपान मारुरोहेति समासत उपायनीकृतं पाठकेभ्यः। अत्र च कथमन्यैः पुरातनैः मध्यशायिभि र्जनपद भ्रमरै र्भारतीय कुसुमरसः करोहत्य मनोहत्यच समास्वादितः इति प्रतिपादयिष्यते विचार तूलिकया। आसीत् कश्चन समयो यदा च भूमध्य सागरे, फि्निय, नामधारिणो व्यापारिणश्चलाचलं विदधति स्म। अमी एव हरिवर्षीय व्यापारिणामुपदेष्टारः पुरातत्व विद्भिः साम्रेडं स्वीक्रियन्ते। एभिः कुत एतत् ज्ञानं समधिगतमिति विचारचर्चायां भारतोपक्षमेवेदं समस्वरं प्रतियादयन्ति वर्षीयांसो भारतीयाः पाश्चात्याश्च।

व्यापार श्रियमुन्निनीषुभिः ,सलमन हिराम|दि राजभिः फिनिशियन भूपैः स्वव्यापारिणो ऽभिभारतं प्राहायिषइतिप्र वादो ऽस्ति ऐतिह्य सैकतन्यस्तपदानां विदुषाम्। एतैः व्यापारि भिः स्वप्रभु नियोगेन भारत मेत्य तत्र त्यसुराष्ट्रस्य व्यापार प्रधानं सुपार स्थानमुपजीव्य स्वीयव्यापारः संवर्धितः इति कथ्यते पुरातत्वज्ञैः। अत्रैव तैः सुवर्ण रजतलवङ्गशाखामृगमयूराणां व्यापारो विहितः।

एतेषां भारतीय वस्तूनां नामानि तेषामिवरानीभाषायां संदब्धैः नामभिः सहवलवत् संवदन्ति येन तेषां भारतीयत्वं विद्वद्भिरुररी क्रियते। ,अरबप्रदेश तटवर्ती देदान द्वीपश्च तैरेतदर्थ मेव स्थापित इति क्रिस्तान धर्म ग्रन्थात् ज्ञायते। हिरोडोटस प्रभृतिभिरैतिहासिकैः बाइबल कर्त्रा चायं व्यापारः अविकलं निज पुस्तक रत्नेषु प्रतिपादितो ऽस्ति। तैर्भारतीय एव समुपकारः अमन्यतेति। अधुना च पारसीकासीरियनादीनां व्यापारसम्बन्धः प्रदर्श्यते। एतैः एतैःदेशै; सह भारतीयानां शुनां सुवर्णादि धातूनां विशिष्य सम्बन्धः समजागरीदिति ग्रीकग्रन्थ कारः कथयन्ति। ,पारसीकभूपेन जरकसीज़ नामकेन रणकमणि भारतो गा श्वानः संयोजिता इत्यस्ति ऐतिह्य प्रमाणम्। कथयन्ति च तद्विदः यद केन चि पारस

सौकल्त्रपत्ने भारतीयानामेव शुनां प्रति पालनाय चतुर्नगराणां धन लाभः संरक्षित इति यत् सत्यं विजयतेतरां भारतप्रदेशो यस्य श्वानोऽपि किल एतावतीं महतीं समृद्धिं विन्दन्तीति ।

विजयिनोऽलक्ष न्द्रस्य निर्यार्कसनामकः पोताध्यक्षः सिंहलप्रदेशात् अर्घ्यानां मणीनां पारसे बहुलं संक्रमणं स्वीकरोति वर्णयति च ता न् भारतीयानेव कौशलान्।

अयि भारत ? सातिशयो महिमा तव । अशेषा यात्रिणस्त वकौशल मभिनन्द न्ति यत् सत्यं मुहंमदीय काले ऽपि त्वमेवा सीः खनिः सर्वेषां रत्ना ना मित्यत्र न के ऽपि स मशेरत । परमधुना त्वं सर्वैरपि तैस्तै र्गुणै र्वञ्चि तो ऽसि । त्वं हि चिरं परै शिथिलित इति विलोक्य मर्मसु प्रहिया महे शोकावे ग मूर्च्छितानि न प्रसरन्ति करणानि । हन्त । हृदय मिव क-म्पते हस्तः, धैर्यमिव विगलति हस्ताल्लेखिनी । लेखिनीव न प्रसरति मतिः । आसीत् सोपि सुखमयः समयो यदा तव यशो दुन्दुभिः सर्व त्रापि अताडयत परमद्य तव दशां विलोक्य कस्य भारतहितैषि णश्चित्तं न दुनोति । तदिद माक्रन्दित मिहैव परित्यज्य प्रकृतमनु-सरामः—

अतः परं कुशद्वीप व्यापारविषये उच्यते । आधुनिक मिसर प्रदेशस्य पुरातनं नाम कुशद्वीपः पुराणेभ्यो ऽवसीयते । अति प्राक्त-नोऽयं व्यापार सम्बन्धः इत्यत्र न के ऽपि विशेरते । कुशदीपाधिप तौ फिराने शासति सति नील व्यापारो भारतकुशद्वीपयोः प्राव र्त्ततेति तदितिहास दर्शनात् ज्ञायते । अधुनापि कुशद्वीपे मन्दिरख-ण्डाः निजरचनां भारतीया मेव बृंहयन्ति । न भारतं विहाय सा रचना कुत्रापि दृष्टा श्रुता वा । तत्र निर्गतानि चीनपत्राणि चीना क्षरै श्चिन्हितानि चीन व्यापारं भारत पथेन द्योतयन्तीति । महा वीरेणालक्षेन्द्रेणग्रीस देशस्य व्यापारं वर्द्धयितुकामेन, अलक्ष न्द्रिय नामकं पोतस्थानमधितटं स्थापितमिति न तिरोहितं क-स्यापि । अनेनेदं नगरं भारत कुश द्वीप योः प्रधानं व्यापारस्थानं स-

मभूत्। अस्यै शाधि पतिना टोलमी महाशयेन अयं व्यापारः, समधिकं प्रोत साहित इति न गुप्तं कस्यापि।

एवञ्च मीमांसयातीतस्य यवनिकोत्तोलनेन च ज्ञायते यदनेन भारतेन सर्वेषा मपि पाश्चा त्यदेशानां व्यापारः समृद्धिं नीतः । स्वावश्यकातिरिक्तानि च वस्तूनि बहिः प्रेषितानि न तत्रान्याय बन्धोऽपि प्रती यते।

यथा ऽन्यैराधुनिकैः व्यापारप्रधानैः हरिवर्षीयैस्वीयव्यापार वृद्धैय अपरेषां हानिः समुद्भा व्यते, तथा न भारते ना चरितं भारत श्च निजकौशल समुन्नति समये ऽपि धर्म मेवो प्रजीव्य निजां समृद्धि मकरोदिति निर्माय मेव वक्तव्यमे। ....................

शीतांशुः

# भगवदभ्यर्थनम्

१

विपन्ने सम्पन्ने सकल विधिना नूनमनसि
प्रभो! संसारे ऽस्मिन् भवसि भगवानेकशरणम् ।
यदि त्वां ध्यायन्तो ऽप्यहह पुरुषाः खिन्न मनसः
स्मरेयुः कंचन्यं वद तदिह शोकान्धमतयः ॥

(२)

हे संसार, समुद्र दुःख सलिलोन्मज्जज्ज नानां पते ?
क्षिप्रंमूढ मतीन् कुकर्म्म निरतां स्तीरं प्रभो प्रापय ।
पुत्रास्ते, जनक स्त्वमीश विपद श्चा कारणं कर्म्म ते
नैवं चे त्स्मृति मार्ग मेषि पतता कष्टे नराणां कुतः ? ॥

(३)

मह्यं देहि मनस्वितां दृढ तमां संसार सवात्मवित्
बुद्धिः शान्ति करी कराञ्जलिपुटं बद्धा मया याच्यते ।
हित्वा त्वां जगतां पते ऽस्ति मम कः साहाय्य कारो भुवि
तस्माद् वाञ्छितमीश पुण्यपूरयविनो मामे विलस्वं विधाः ॥

४

हे दीनेश ? विधीयतां प्रचलितुं पन्थाः सुगःशान्तिदो
यस्मिं स्त्व त्पद पद्म भूतिविहितध्यानं मदीयं मनः ।
न भ्रन्ति क्वचिदा मृ्या दपि तथा भीतिं न पश्येद्दरि
किन्तु क्षेम करे लभेत करुणां ते सत्वरंच व्रजेत् ॥

(५)

स्वस्थं देह मथास्थितस्य न पुरो व्याधि र्निरुध्यात्पदं
प्राणिभ्यश्च परा दया विलसतु प्रेमापि सद्बन्धुषु ।
सत्वस्यश्च भवेदथे न्द्रिय गणोऽप्या त्मा परो दासवत्
यत्कारुण्यपयोधि मध्यपततः स्नानं भवेन्नित्यशः ॥

शच्चामवमसरो यदत्र गुरुकुले ऽसीमना प्रेम्णा धर्मसेवां विद धतश्चिकित्सकमहोदस्य सुगृहीतनामधेयस्य श्रीहरिश्चन्द्रमहो दयस्यात्मा वसन्तपञ्चमी दिवसे कुलभूमिविहाय सहैव वसुधां मातरमपि विहाय लोकान्तरमाप। किमधिकं ब्रूमः।

तस्य हि महोदयस्य भाग्यमेवे दमभूद् यदत्र कारणवशादर्धाङ्गरोगाध मस्तत्तनावधिकारंचक्रे।

यद्भाव्यं तद्भवत्येव। अतृप्तोऽयमात्मा देहाद्देहान्तरं सुकुमारो जीर्णमलिनवस्त्राद्वस्त्रान्तर मिव प्राप्नोत्येव। इति भाविनि जन्मनि परमात्मकृपया भवितैव शुभोदर्क इति तत् सम्बन्धिनामपि हृदयो नि अवश्यं विचिन्त्यापगतशुग्भराणि भविष्यन्ति। अथवा 'मरणं प्रकृतिः शरीरिणां विकृति र्जीवनमुच्यते बुधैः' ॥ अन्यच्च—

अस्मिन्स न्निहितशरीरसम्बन्धविर हेऽपि न सम्बन्ध विरहो य-तो हि "यस्य येनास्ति सम्बन्धो दूरस्थस्यापि तस्य तत्"

## मातुरभ्यर्थना

अयि लालिता मम सूनवः श्रवणातिथीक्रियता मिदम्
भवताम्पुरा बहुशोदित न्निजमातुरार्त्त मुदीरितम् ॥ध्रुवम्।

कगतानि तानि दिनानियेष्वधिक स्मुमोद मनो मम।
भवतांनिरीक्ष्य मुखान्यतृप्तविलोचनै रतिमन्थरम् ॥
अशिषन् पुरा तनया मया स्तुधिसंवृता भवतां चिरम् ॥
भवतो ऽद्य रङ्कसमा न्विलोक्य ममास्रमु ज्झति लोचनम्॥

भुवनाधिपाः मम सन्ततिं सिरसा द्रियन्त सभाजनैः
परमद्यरोदिमि वीक्ष्यतां निकृतामनाथवदुज्झिताम्॥
निजरक्तमप्युदकायित क्रियते स्म संयति यत्कृते।
हतभाग्यमातरि तत्पुनर्मयि वत्सल त्वमपोहितम्॥

स्मृतिमागतोऽभ्युदयो ध्यमा मधिकं दुनोति पुरातनः
प्रियमेव वस्तु पुरानुभूत महो भवत्यतिदुःखदम् ॥
भवता व्यथा ममचिन्त्यते नकदाचिदेव चिरन्तना
हृदयम्ममा स्ति सहस्रधा किल शोकशंकुविदारितम् ॥

परदुर्ग मध्यगता ऽप्यस्यै जननीभवद्भिरुपेक्ष्यते
नविलोक्यमेयविशीर्ण मप्यलकंभवद्भिरलङ्कृतम्।

वपुरीदृशै र्वसनैर्युतम्मलिनैरजोभिरलंकृतम्।
किमुनेक्ष्यते किलशोणिताश्र निपातितैर्नयनैः क्षणम्
व्यथिता हृताभरणा ऽरिभिःन भवद्भि रप्यह मीक्षिता।

वहुवत्सरं चिरनिद्रितं नक्रां मपार्श्वि विपोवनम् ॥
क्कगताधियो भवताम्ममो द्धरणात्मकाश्च पुरातनाः
क्कगताः प्रतापशिवादय स्तनया विहाय यशोमम ।
अधुना ममोद्धतये मतिर्निजमानसेषुविधीयताम् ॥
स्मरते मनो मम वीक्षितुं भवताम्पुरातन कीर्त्तनम् ।
निजवान्धवान् सघृणं विसृज्य रिपुर्निजः क्रियते कथम् ।
अवलम्व्याता मधुनैकता परिहीयता श्चिरनिद्रितम् ॥

# ईशस्तवः

नारायणचरणारुणकमलं भजभवभीतिहरम्-ध्रुवम्
विमलफलावलिसुन्दरमूलं मङ्गलकलशनिदानम् ।

मुनिजनमनोमुकुरमृदुविम्बित मतिशयमोदकरम् ॥
विषमविषयकमलाकरपुञ्जे भवलतुषारसमानम्
अगुणसगुणमथ गुणगणपुञ्जं जनमनआननवासकरम् ॥
भववारिधिमन्दरमतिसुन्दर मखिलविवेकनिदानम् ।

पापपुञ्जघनपटलसमीरं न वलनवलवलमोदकरम् ॥
बुधकुमुदावलिचन्द्रमुदारं सरससुभक्तिवितानम् ।
बहुरचनाचलचारु मुदारं जनवनसुन्दरकुञ्जचरम् ॥
मोहगहनवनदहनकृशानुं शुभकरुणाजलमालम् ।

नवलविचारविकासविलासै र्बहुविधहर्षविशेषकरम् ॥
मदमत्सरमृगयूथकिरातं मनसिजकरिहरिभानम् ।

पापाकुलचञ्चलचलमानसनचरममर्षविकर्षकरम् ॥
संसृतिसागरतरणिसमानं कालकरालजालहरज्ञानम् ।

कलुषविचारतमस्तलभानुं नवमृदुमानसपङ्कहरम् ॥
अशरणशरणपरिवलवलमूलं कृतपापावलिदानम् ॥

पदमनयनमिव सेवकरक्षक मखिलमनन्तविचारवरम् ।
श्रीवत्सः

# महाकविभारविः

## ,भारवेरर्थ गौरवम्'

प्राचीनतमः कविकुलकमलभास्विर्जनुषा कदा कतमंच जनपदमलञ्च कारेति सा म्प्रतम स्ता विवाद—मेव तथापि षष्ठशतकाप्राचीनइति निर्विकल्पम् । देशनिर्णयस्त्वस्य भट्टकविप्रवरस्यानिश्चतएव-यद्यपि भागवतमहाशयैरयं सह्यादिदाक्षिणात्याद्रिवर्णनेनैकान्त दाक्षिणात्येतिनिरचायी त्यहोतेषांसिरलासर णिर्देशनिर्णयस्य यथाच्चप्रसिद्धो वाणभट्टो नियतंकश्चन वनवासी भिक्षइत्यापद्यत इत्यैतिहासिकै रेव निगृहणीया एते॥

उदन्तश्चास्य जन्मनःप्रभृत्येवमनुश्रूयतेविचित्र कौतुकावासे नवे वयसिकुतुककुतुपंविहायनितरामध्ययनार्पितचेता अपि, न स्यान्नः पुत्रः कतिपयाक्षरज्ञानलवदुर्विदग्ध. इति मीमांसमानेन भूयोभूयः पित्रानिर्भर्त्सितः सविवेकं तदनिदानमिति निविचिकित्समाकलय्य परंनि र्वेदमापन्नः खपुष्पायितनिखिलक्रियाक्रतुतन्त्रः पितरौ नामावशिशेषयिषुः समयं प्रतीक्षमाणः कञ्चित्काल मयापयत् ॥

अथैकदा-उदयाचलचूलमालम्बमाने सकलकले ज्योत्स्नाप्रवाहधवलितदिगन्तराले चन्द्रमण्डले चङ्क्रम्यमाने च प्रतनुप्रकाशशालिनि प्रदीतप्रकरनिभे नभसितारागणे प्रावारकान्तरमास्थाय रहसि वार्तालापनिमग्ने पितरि विशशमिषुरच्छाच्छा छुरिकांकरेणाकलय्य निःशब्दसंचारः शनैः शनै स्तामेवदिशमभिदुद्राव । उपगत्यचाभ्याशभित्तितलनिहितकपोलपालि रिममालापमशृणोत् माता प्रियनिरुपमेयमद्यकलावतः कौमुदी पिता- 'प्रिये ! सतां मनांसिमोदयन्ती भारवेः कीर्तिरि वेति सोपमयैव ।

'आकर्ण्यचा मुमालापं ,आःकिमिदंकर्तुं प्रवृत्तोऽस्मीत्यन्तर्जातसन्तापः प्रायश्चित्तमाचिकीर्षुः पितर्यवगमय्यनिखिलमर्थं श्वशुरालयमगात तत्रवगाः कालयितुं गतः क्रमेण जग्रन्थकिरातार्जुनीयम् ॥

अथसमाप्ते प्रायश्चित्तावधौ व्रजत्सुकतिपयेषु वासरेषु 'भवत

दिविवेकीपञ्चषाण्ड दिनानीत्यनुसृत्य शिथिलादरे संवृत्त सम्बन्धि जने हास्यविलासैश्चसूचितभाग्यवमाननस्ततोऽपवृत्य स्थानांन्तरे वसतिमूरीचकार ॥

क्रमेण चावसिते वित्ते सीदतिगृहजने ब्राह्मणी रहसि प्रोवाच प्रिय सीदामस्तमामहरहर्विताभावात् तत्प्रतिविधेयमत्र कथञ्चित्। भारविरपि सम्यगित्यवधार्य्य स्वकलितम्—

"सहसाविदधीतनक्रिया मविवेकः परमापदांपदम्
वृणुते हिविमृश्यकारिणं गुणलुब्धाः स्वयमेवसम्पद"

इतिपद्यं कस्यापि करुणाकुलितान्तःकरणस्य सहृदयस्य श्रेष्ठिनआवासे निचिक्षेपपञ्चसहस्ररुप्यके ॥

सोऽपि च श्लोकमेत चतुर्दिकसुललितकाष्ठपट्टिकारमणीये फलक आरोप्य स्वशयनागारे नेत्रयोः पुर एव समालम्बत।

अनन्तरं स श्रेष्ठी कदाचित्व्यापारवशात्स्वीयंपञ्चवर्षकल्पं शिशुं वेश्मनिपरित्यज्य- निर्ययौ कारणवशाच्च बभ्राम इतश्चेतश्च सुबहूनिवर्षाणि पुनश्च स्वदेशंपरावृत्यस्वगृहचरित्रं प्रत्यभिजिज्ञासिषुर्निशायांकपाटिकामुल्लङ्घ्य वेश्मन्यन्तः प्रविवेशप्रविश्य च कस्यापि यूनोऽन्ति के शयानां स्वीयां रमणी मवालुलोकत् ॥

वीक्ष्य च कोपविपाटलिवदन उभावपिसहैवजिघांसु रसिं विचकर्ष प्रजिहीर्षो श्चास्यतरवारकोटिः सहसा सञ्चरन्ं पुरःस्थितेनफलकेन पपात चतद्भमौ तेनरुद्धपाणिर्यावत्फलकमुत्थाप्यवाचयति तावत् 'सहसाविदधीत नक्रियाम्' इत्यद्राक्षात् आलोचितार्थश्च विहायामुंसुप्तमंशयानस्य पुंसोमुखारविन्दाद्वसनमपजहारएषोऽपि चजनस्यानंनपरिचिचायच निपुणमवलोकनेनस्वीयमेव सुतम्॥हर्षोत्फुल्लनयनयुगलश्च तदेवपद्यं तद्दत्तकं मत्वा मुहुर्मुहुस्तत्राकृतोऽभूच्चकारचास्यक्रयणमतिम्।

अन्विष्य च भारविंकृतक्षताभरानतमौलिस्तमपि पुत्रकलत्रत्रातारमवगम्य सबहुमानंप्रतीदय पञ्चलक्षरुप्यकेण तत्पद्यमक्रैष्ट ॥

एताषदेवानुश्रूयते ऽस्य कविचक्रचूड़ामणेः किरातरचनावैषयिकं चरितं तथास्य बालचरितम् ॥

,श्रीवत्स:'

## ( सेल्ट जातिः )

कासीत्सेल्ट जातिः, क्व निवसति स्म पुरा सा जातिः, कश्च तज्जातीय जनानां धर्मः इत्यादिकं सर्वमेवास्मिन् लेखे प्रदर्शयितुं वयं प्रवर्तामहे।

इतिहासस्यालोचनेनैतदेव प्रज्ञायते यत्प्राचीना सेल्ट जाति रार्यजातेरेव काचिच्छाखा। सेल्ट इति नाम्नो मूल भूतंनाम ऐतिहासिक पुस्तकेषु 'शाली' 'गालटी' इत्यपि च लभ्यते। अस्माकं सम्मतायेनदेव प्रतीयते यत्ते जनाः काली पूज कयसंनू अथवा कालस्य चते पूजकाः स्युरित्य नुमीयते यत्पुरस्ताद् दर्शयिष्यायमः।

सेल्ट जातेः ये ब्राह्मण उपदेशकाः ते 'ड्रईड' इहि भाष्यन्ते यतस्ते 'ओकवृक्ष' पूजयन्ति स्म। ते ब्राह्मणाः सर्वस्मि न्न व समये शुभ्रमेकं वस्त्रं धारयन्ति स्म' अथ च यज्ञोपवीतस्थानीयां सर्पाण्डमालामवधारयन्ति स्म। तेषामुपदेशकानां ब्राह्मणानां वा तत्र तत्र देशे तादृशः प्रभावो भारते वर्षे पुरा ऽभवद् वर्तते चापि अद्यत्वे यथा ब्राह्मणानाम्।

---

( २ ) भारते च सर्पाणं पूजायापि प्रसिद्ध व। अन्यच्च कालप्रिया'थस्य शिरोभुषणमपि सर्प एव। अत्र सर्पाण्डानां पुटकान्त र्गतानां मालाधारणं मंगलजन कमस्ति

( १ ) पुरा ऽश्वत्थादिवृक्षाणां पूजा प्रचलिता ऽभूत्।

न कोऽपि राजा तेषामाज्ञा मुल्लंघयितुं समर्थो बभूव च तेषामाज्ञां विनैव केनाप्यपरेण साकंयोद्धुं शक्तः। इत्यादिकं सर्वमेव तेषां सविस्तरंमग्रे वक्ष्यते।

तत्रस्थाना ब्रह्मणानां राद्धान्ताः

पुनर्जन्म विषये तेषामेष सिद्धान्तो यत्सर्वेषा प्राणिनां मरणा नन्तरमात्मा न नश्यति, अपितु नित्यः स च किंचित्काला लानन्तरं पुनरपरे प्राणिनो देहे प्रविशति। एष एव राद्धान्तो भारतीयदार्शनिकानामृषीणां पुनर्जन्मविषये ऽस्तीतिनेह संशयलेशः।

शकुनवानस्ते ब्राह्मणाः अभूवन्। ते पशुपक्षिणां वामदक्षिणहस्त योगः मनेनोड्डयनेन वानिष्टमिष्टं च निरूपयन्तिस्म। अपरोऽपि सिद्धान्तो भारते यश्च रामायण महाभारतादिनामनुशीलनेन प्रतीयते मन्यन्ते स्म शकुनविद्यां प्राचीनाः विद्वान्सः। यवद्यत्वे ऽपि बहु दृश्यते भारते।

प्राणिहिंसनम् ? तैरिदं मन्यते स्म यदश्वादीनां पशूनां वधेन मनुष्यबलिदानेन च स्वर्गप्राप्ति शक्येति।

तां च प्राणिहिंसां न को ऽन्यपरो ब्राह्मणं [ ड्रूईड बिनाकर्तु

मशक्नोत्। सैव रीतिः भारतेवर्षे ऽद्यावधि प्रचलति ब्राह्मणाएव कारयन्ति पशुहिंसा यागस्याग्या महाभारते ,काले ऽद्यत्वे पि अथचन को ऽपि जनो ब्राह्मणं बिना यज्ञ व्यधान्। कदाचिद् बौद्धकालत्प्रागेवास्मा त्स्थाना ते ऽन्यत्र देशे प्रसृताः यषुहिंसा विधिमनुचक्रुः।

तज्ञातेः ब्राह्मणानामेव नियमो यन्न को ऽपि ब्राह्मणः शस्त्राणि वा स्त्राणि धारयेत न चाश्वमभ्यारोहेयत्। अन्यच्च न को ऽपि द्विजो युद्धे गच्छेत्। अथ च न तेभ्यो भूपतिः करमग्रहीत् तमेव विधिं पश्यामो वयं मनुस्मृतो।

तैर्ब्राह्मणै बिनांन कश्चन न्यायं कर्तु मपारयन्। त एव ब्राह्मणाः न्यायं वितरन्ति स्म। स एव विधिः मनुस्मृतो यःसभाध्यक्षो न्यायाध्यक्षो ब्राह्मण एव भवेत्तान्नः इति समुपलभ्यते।

अतः परं वय मन्यदपि सामस्त्येन प्रदर्शयिष्या मः

एते सेल्ट जाते ब्राह्मणाः ड्रूइड् माम्ना ख्यायेन्त द्रं वृक्ष इडयन्ति पूजयन्ति ते ड्रूइडः एवं व्युत्पत्या मूलार्थव्युत्पत्या च वृक्ष पूजकत्व मेव तेषां नाम हेतुः।

केचितु द्रूविद् अस्यशब्दस्य संवादं लभन्ते।

## उषाया नियमाः *

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते-किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोप्यधिको यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति। येन ममागपि संस्कृतमबुध्यमानानाम र्थाववोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥≈) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याङ्कस्य मूल्यं द्वावाणकौ ≈) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं गृहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्यामभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्र ग्राहकसंख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्यये यद्यस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेम मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः। अयुक्तानि विज्ञपनानि न जातु स्वीकरिष्यन्ते।

प्रबन्धकर्त्ता
उषा
गुरुकुल कांगड़ी
डा० शामपुर

Registered Number A. 639.

*ओ३म्*

# उषा

संस्कृतमासिकपत्रिका

उषा अजीगर्भुवनानि विश्वा। ऋग्वेदे।

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः।
विगलतु जनतान्धकारक्लेशः, प्रसरतु देवगिरानुपाविशेषः॥

विषयसूची — पृष्ठाङ्कः




कांगड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता, प्रकाशिता च

# साहित्यचर्चा

महर्षिपतञ्जलि तथा प्राचीन भारतः—श्रीमता विद्यालंकारेण चन्द्रमणिना इदं स्वमूलकं नवीनमेवैतिहासिकं पुस्तकमाविष्कृतम् । पतञ्जलेर्महाभाष्य मवलम्ब्य तत्समकालिकः सामाजिको नैतिको धार्मिकश्च भारतवर्षदेश कीदृश इतिसप्रमाणं विचित्रयाऽन्वीक्षया दर्शितः। प्रत्येकं नवान्वेषणप्रियेणेद मानाय्य स्वयं पठनीयम् । मूल्यम् ।=)

प्राप्तिस्थानम्:—

चन्द्रमणिः

गुरुकुल कांगड़ी

शामपुरः

---

## लेखराम आर्य्यपथिकः—

श्रीमद्भिर्महात्मभि मुन्शीरामसुगृहीत नामभिरिदं पुस्तक स्वयंरोचकयाऽऽर्य भाषया विलिख्यमुद्रापितम् । कथमिवार्यवीरधर्ममाश्रित्य जीवनं तृणायामन्यन्ते धर्म निष्ठा इत्ययमपूर्वो रसास्वाद एतस्मादार्यै ग्राह्यः ।

मूल्यम् १)

प्राप्तिस्थानम्:

गुरुकुल कांगड़ी

शामपुर

---

तत्वलहरीः—नवीन न्यायसूत्राण्या श्रित्य कारिकामयं पुस्तकं पण्डित हरिदत्त त्रिपाठिना विद्यार्थिनां सुखाववोधाय विरचितम् ।

रहस्यलहरीः—पुराणादि स्मृतीना मपि स्वतःप्रामाण्यं स्थापयितुं दार्शनिकभाषया विशदीकृतं प्रौढपुस्तकम् ।

प्राप्तिस्थानम्

हरदत्त त्रिपाठी

गुरुमहल्ला

अमृतसर

---

# उषा



| द्वितीये वर्षे | ... ......पौषः...... ... <br> सं० १९९१ वि० | प्रथमोऽङ्कः |
|---|---|---|



## नववर्षाभिनन्दनम्

एहि नूतनवर्ष ! लोकेनादरादभिनन्द्यसे,

स्वागतं कर्तुं स्थितैस्त्वं प्राणिभि श्च विलोक्यसे ॥ ध्रुवम् ॥

अत्र तावन्मारुतेरित पादपाश्रितपक्षिभिः,

त्वं, स्वचञ्चूनां विपञ्चीपञ्चमैरभिगीयसे ॥

त्वत्प्रतीक्षापरवशा इव पुष्पिता विपिने लताः,

पुष्पपातैरर्चितुं त्वं पादपै रभिवीक्ष्यसे ॥

मन्दमन्दं वाति वातोऽयं तवागमहर्षितः,

स्वागतायातै स्त्वमस्माभिः स्तवै रभिगीयसे ॥

नाऽशुभं संजायता मस्माक मेकं त्वत्क्षणम्,

सौख्यमेवो त्पादयेदाशाविभागो ऽभ्यर्थ्यसे ॥

विस्खलामो मातरम्प्रति चेन्निजात्कर्तव्यतः,

स्मारय त्वं तत्क्षणन्नः, सार्चनं त्वमुदीर्यसे ॥

**मिलिन्दः ।**

---

टि० प्रजापतिर्वै संवत्सर इति ब्राह्मणम् ।

# सम्पादकीया विचाराः

नवो वर्षः—वर्षकल्पं जीवनमियमुषाऽस्माक मधुना समापितवती नवे वर्षेऽधुना ऽयमस्य प्रथम श्चरणविन्यासः । अस्माकं भावुकाः पाठका नूनं हर्षिता भविष्यन्ति इदं विचार्यैव । अधुना उषा आत्मनोरूपमपि परिवर्त्त्य विकासयतीव भवतां मनांसि । नूनं प्रत्यङ्गं नव्यर कवितोद्भावनैरपि अस्माकं सहृदयाः कवयः उन्मेषयन्त्येव भवतां मनोमुकुलानि तत्र किमधिकं वयं ब्रूमो यत्र सोत्साहा भवन्त एव नः कार्येषु मुहुर्मुहुः सोत्साहान्नो विधास्यन्ति ।

पाठकाः ! यदि अधिकमपि किञ्चिदपेक्षते कुतो नास्या ग्राहकसंख्या भवता वर्ध्यते । अधुनावधि लाभ मेकतो विहाय हानिमेव महतीं सहन्तो वयं भवतां सेवाव्रताः कार्य मुद्वहामः । यदि भवतां प्रेम नास्मासु हृदयेऽङ्कितम भविष्यद् नूनं कदापि न वय मिदंकार्यं निर्वोढुं स्वप्ने ऽपि संकल्पमकरिष्याम ।

परं भवतामेव नोऽधुनाऽपि प्रेम महतीं द्रव्यहानिं साहयति । परमियती महती द्रव्यचिन्ताऽपि बाधतेतमां नः, यद्वयं भवता मधिकां सेवां कर्त्तुं न पारयामः । वयमिच्छामः अस्य पृष्ठसंख्यां द्विगुणीकर्त्तुं, परन्तु द्रव्यं क्व लप्स्यते । इयत्यपि वयं विक्रीतात्मानस्तिष्ठामः । किमु पत्राणां द्विगुणतायाःप्रत्याशा। यदि अस्ति मातृ भाषायाःदेववाण्याश्च कश्चिदपि प्रोत्साह स्तर्हि ग्राहक संख्या वर्धनीया अथवा धनाढ्यै र धिकं धनमेव दानत्वेन देयम् । यतस्तेषां यदि नैव चेन्निर्धना नामेवाऽस्माकं भारतीयानां संस्कृतच्छात्राणां महोपकारः स्याद् । आशास्महे वय, मवश्यमत्र पाठका दत्तावधाना भविष्यन्ति ।

केचन दिव्यचक्षुषोऽस्माकं दोष दर्शनेनैवतुष्टिं भजन्ते परमत्र सौहार्देन निवेदयितुं वर्षारम्भ एव वयं कृतविचाराःस्मः । यद् यदि अस्माकं दोषेक्षणेनाऽपिकेचिन्मुदं वहन्ते वहन्तां नाम। "निन्दन्तु नीति निपुणाः यदि वा स्तुवन्तु ।"

परं यदि केचनाऽपि सहृदयाः गुणलवेप्सवो यं कमपि तोषं हृदि वहन्तः अस्माकं सेवां कृतार्थयन्ति तर्हि वयमेतावतैव धनाऽपगममविगणय्याऽपि नतशिरसः प्रयत्नसाफल्यं निश्चिनुमः । यतः विद्यास्वरूपिणी सरस्वती नो विनयमेव शिक्षयति । अन्यच्च,

"दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणम्" ।

---

## टिप्पणयः

युद्धपरिणामः—हरिवर्षीय महाभारतस्य कः परिणामो भवितेति न कोऽपि निश्चयो मनसि जागरूकायते परमवश्यमिदं स्थिरं,यदस्य क्षत्रसम्भारस्य महानेव विनाशो भविता । सहैव च क्षत्रं द्रविणमिति, ब्राह्मणग्रन्थ वचनानुसारेण जातीनां द्रविणमपि विलयं याता ।

आक्टोवर संख्यायाम् रिव्यू आफरिव्यू इत्यस्य आंग्लपत्रस्येयं सम्मतिरस्ति यदिदं जन्य मवश्यं सहस्राणामपि श्रमजीविनां मह-

तीं हानिं जनयिष्यति । यद्यप्यांग्लधनिकाः ददति युद्धाय भिक्षाम् । पर भारतीय माण्डलिक सामन्तानां दानापेक्षया न तुला मधिरोहति । सहैव च भारतीयग्रामेभ्यः सन्नाहिताः रणभटाः स्वल्पकेन भृति द्रव्येण आत्मनो जीवनं राज्यपणायार्पयन्तोऽपि नतरां मवद्धति निजगृह बन्धूनां पर्याप्तोपयोगि द्रव्यादानम् । तेनैव स्वल्पेन द्रव्येण सकलमपि कुटुम्बं बिभ्रति इति तेषा मेव पश्चाद् युद्धे समाप्ते का गति र्भवित्री इति महदेव दारुणं परिणामं चिन्तयति चेतः ।

किं कारणम्—उपरोक्तांगलपत्रोद्धरणेऽङ्कितस्य आंगलधनिक-दानस्य भारतसामन्तानां तदपेक्षया तुलारोहणाऽसमर्थतायाः को हेतुः ? कदाचिदस्मभ्यमवसर एव ।

क्रिश्चीन शिक्षा—बायबिले प्राय इदमुपदिश्यते यत् "चपेटया एकतःऽधिगल्लं प्रहृत आत्मनो योगक्षेमं वाञ्छन्नपरतोऽपि प्रहारं वाञ्छे-त्" । परं किमयमुपदेशः सफलितोऽपि नवा क्रिश्चियनसंसारेण ?। अधुना तु न तादृशम् ।

अद्यश्वस्तु अप्रहृतोऽपि परान् प्रहर्त्तुं मभिधावति । सकृत्प्रहृतश्च परस्यसमूलमुच्छेदं कांक्षति न चात्मनो मुखे प्रहारान्तरम् । अत एवायं परिवर्धमानो संग्रामरणरणको न कमपि शान्तेः सीमान मूरी करोति ।

भावि–सम्पत्तिः—न्यूस्टेट्स्मे न पत्रस्य पूरकभागो महाशय 'वर्नार्डशो' इत्याख्येनालेखि । पत्रे ऽस्मिन् युद्धमपेक्ष्य सकलमपि भावि वर्त्तमानावस्थाजातं समीचीनतया विवेचितम् । तत्र एवं भाविनं वृत्तान्तं मुपवृंहयति ।

"युद्धावसाने महती राजसभा भविष्यति यत्र सर्वस्यापि युद्ध-जातस्य विचारः समीचीनो भविष्यति। तत्र निष्पक्षपातायमानो ऽमरीकाप्रदेशो वयं चै कत्र सन्धि विग्रहादिकं निर्णेतुं प्रवर्त्तिष्यामः। तत्र आंग्लजनताऽपि अस्मिन् युद्ध विषये दोषरहिता न सिद्धा भविन्री। अपि तु जर्मनदेशस्य जनतया सदृशी साऽपि युद्धस्य महतो जगतोऽप-पराधस्य कर्त्री निश्चेश्यते। सर्वेऽपि अमेरीका वास्तव्याः कथयिष्यन्ति यद् 'इमौ देशा वेव परस्परं घृणां वहन्तौ वैरभावापन्नौ, चत्वारिंश द्वर्ष मन्योन्यं द्वेष मुद्वमन्तौ, सिंहाविव, प्रत्युन्नकेसरै रुक्षखण्डतारोपं धारयन्तौ' अधुनैव चान्योन्यं सिंहकमै धावन्तौ, अन्योन्यग्रीवायां सुत्कीलितदशनै युद्धं विधाय शान्ति मर्हतः। अतो अधुना सिंहतां विहाय पालितश्वता ताभ्यां धारणीया'।" अत्रभाविनि को विश्वसेद् ? वयंतु आत्मनो न्याय पक्षमाश्रयामः।

राजभक्तिः—श्रूयते शान्तिनिकेतनस्य वोलापुरस्थस्य छात्रै र्मिष्टान्न वर्जनेन ४०) रूप्यकाणि एकस्मिन्मासे रिलीफ् फण्ड इत्याख्ये धनसंगृहे संगृहीतानि। कदाचिदनुमानतः घृतादिपरिहाणेनापि ५००) शतानां पञ्चरूप्यकाणा मेकत्रीकरिष्यते।

अहो महोत्साहो विद्यार्थिनाम् यदेते भोजनादिकमपि जीवनद्रव्यं राजवर्गस्यकृते तृणाय मन्यन्ते। किमस्य महतस्त्यागस्य भारतस्य वाल-वीरै र्भविष्यतिआसादयिष्यते नवा किंचिद् ?। किं पुनरपि भारतस्यात्मवि भावनीयो देशः वालारुणेनारुणी करिष्यते नवा ?। उत आदित आरभ्या-न्तपर्यन्तं त्यागनीत्यैव जीवनं सफलयिष्यते ?। को वेद विधातु र्भाविनि-धेयम् ?। परन्तु वयन्तु श्रीमानमुत्कस्योदारतां धारयतः प्रजां नियमयतो राजवर्गस्य दयापारावारोपप्लवं संभावयाम एव। कदाचित्किम्, अत्र-

श्यमेवप्रभुवर्ग आत्मनो मनसि भारतीयां राजभक्तिं सस्मयं विभावयन् आशातीतेन फलेन प्रतिविधास्यति । किं वहुना तदेव सौभाग्यं भारतस्याऽपि; यदनाकांक्षितचरं फलं लभ्येत ।

भारतीया वीराः—महाभारतस्य यथा प्राचां समये हरिवर्षादि देशेषु पद मधान्, आत्मनश्च यशोवैजयन्तीं प्रकाश यामासुः तथैवाद्याऽपि राजवर्गस्य साहाय्यमापन्नाः भारतरणोद्धुरा भटाः हरिवर्षस्य समरावन्यां पदानि सोत्साहं निदधति । तथैव च तत्रत्यानां मुखेभ्यः प्रशंसा वचांसि शृण्वन्ति । कदाचिदस्त्येव सौभाग्यस्य पुनरुदयः । भेदस्तु इयानेव । पुरा खलु प्राग्दिशो भाग्यभानूदयोऽधुना प्रतीच्या मेव । वयमपि तेषां सहृदयतां वहन्तः आकांक्षामो यत्तेषा मवश्यमेव उद्धारः स्यात् । अवश्यमेव तैर्भटैरपि सर्वथा भक्त्या तनुपातमगणयित्वा प्राणाः युद्धेऽर्पणीया एव । अन्यथा विजय लक्ष्मीर्दुर्भरायते ।

अस्माकं मित्रमेकदा वर्त्तमान युद्धमवलोक्य ऊचे, यदद्यश्वः कदाचिद् हरिवर्षस्य वास्तविकं महाभारतमुपस्थितम् । यथाऽस्माकं सकलापि दिव्योन्नतिर्महाभारतेन हेतुना सहैवार्जुनादिभिरस्ततां याता एवमेवैषामपि पाश्चात्यानामधुना उन्नतिजीवनस्यान्तक एवायंसग्रामसन्नाहो भविता । व्यतिकरे चैशिया खण्डःकदाचित्पुनरुत्पतन् लक्ष्यते । अतः परं पंचसहस्रवर्षेषु व्यतीतेषु, अवश्यं एशीयाखण्डस्य वासिनो नव्यसभ्यता शालिनो भूत्वा योरोपखण्डे वत्स्यन्ति । तत्रत्याश्च अर्द्धसभ्यानाख्यास्यन्ति । परं हरिवर्षीया अधुनातन मिदंयुद्ध मुपलक्ष्यैवात्मनः पुरातनीनामुन्नतिं निदर्शयिष्यन्ति कथयिष्यन्ति च यदत्रत्येन महाभारतेन हेतुना सर्वस्यापि उन्नतिपदस्य हापितम् । ततआरभ्य हरि-

घर्षो विलयं याति। इत्येवम् श्रुत्वा एशियाखण्डवासिनः सकलमपि तेषां प्रागवृत्तं तथैव मिथ्याकथावादं कथयिष्यन्ति, यथा इदानीम् अस्माकीनं पाश्चात्याः॥

---

## कुण्डलिका

नौका मे क्रियती, ततो ग्रावभरिता च,
सावर्त्ता कूलंकषा, कैवर्तो मदिरा च,
कैवर्तो मदिता च तर्यपि मध्ये धारमिलेयम्,
उपरि घटाऽपि च घोरा प्रलयमिवाचरतीयम्।
प्रबल प्रभञ्जनोऽयं, गतिरिह नाथ परा का,
करुणारित्रमुदञ्चय, पारमायातु मे नौका॥

---

# गुरुकुल विद्यार्थिनां भविष्यज्जीवनम्

भद्रा महाभागाः !

"गुरुकुलस्था विद्यार्थिनः पाठविधिमेतदीयं परिसमाप्य, उपलभ्य च गौरवान्वितं पदं स्नातकाख्यं, किमारब्धारः? किं वा विधातारः? नह्येते राजकीयेभ्यः शिक्षणालयेभ्यो ऽधिगतशिक्षाः; नात एते राजकीये कर्म्मणि कौशलमात्मीयमाविर्भावयितुं प्रभवः, न च कस्मिंश्चिद् गुरुकुलादिभ्यो ऽसम्बद्धे विद्यालये महाविद्यालये वा ऽऽध्यापयितुं प्रभविष्यन्ति, यतिष्यन्ते च। किमेते ऽनुपात्तवृत्त्या वासराणि गमयिष्यन्तीतित्वतीव लज्जाकरं, सम्भावनानर्हं च। कथं तर्ह्येते धनाधिगमाय विहितव्यापाराः सन्ततिरक्षणशिक्षणपराश्च भविष्यन्ती" त्यादयो विचाराः सत्स्वपि गुरुकुलादधिगतशिक्षेषु कार्यक्षेत्रमवतीर्णेषु केषुचित्स्नातकेषु गुरुकुलेन सह बद्धसख्यानामपि, एतदीय शिक्षणरीतिनीति सन्तुष्टानामपि, चिरं चित्तभित्तिमधिरोहन्ति।

प्रति वर्ष मिदानीं फलप्रसवोन्मुखतां गतेऽस्मिन् गुरुकुलतरौ, तेषां सर्वे ऽप्येते प्रश्नाः संदेहाश्च शरदम्बुधरवदेष्यन्ति नाशमाशु। कियत्कृतं, कियत्फलितं, कियदवगलितमनेनेतिसर्वमचिरेणाप्स्यत्येव तेषां नयनपदवीम्। तथापि वयमत्र विषयमिमं केषुचिद् भागेषु किंचिद् विवृणुमः।

नात्र कस्यचिद् बालधियोऽपि स्याद्विप्रतिपत्तिः, यद् गुरुकुलस्नातकेन स्ववस्त्रभोजनादिक्लेशरोधयोग्यं स्वसन्तानसन्तानस्य साधुतया रक्षणक्षमं धनं न केवलं न दुष्प्रापमपितु सुलभतरम्।

धनोपार्जनप्रयोजनमतः परं विषयरसास्वादः, धनवत्तामात्रमासाद्य जीवन एव मानलाभो, महत्स्वनुष्ठेयेषु कर्म्मसु तदायोजनं वा ऽस्ति। तत्र जीवन यात्रायां तदुपयुक्त धनेन सिद्धायां विषयास्वादो न महत् धनोपार्जनं प्रयोजनम्। धनवत्तयैव जावने मान लाभो न द्रढीयान्। मृते हि धनिनि न नामापि स्मर्यते तस्य सादरं, मानजनकानां गुणानामभावात्। यदि ह्युपार्जितेन धनेनानुष्ठीयते किंचिदुपकारि, बुद्धिकौशल-प्रकटनपरं वा कार्य्यं, तर्हि धनोपार्जन मगर्ह्यमेव। इदं चार्थोपार्जनस्य प्रयोजनान्तरेषु मानादरलाभरूपं प्रयोजनमन्तरेणापि धनं सुशक मासादयितुं गुरुकुलीयेन वर्णिना। कथं मानादर लाभः सुलभ इति वक्ष्यते परस्तात्।

गुरुकुल विद्यार्थिनां धनवत्तां किंचिदालोच्य वयमिदानी मपरेषा मपरत्राधिगतविद्यानां धनदशां किंचिदालोचयामः। बहवः खल्व-द्यत्वे लब्धोच्चोपाधिका भ्रमन्ति जीवनायैव धनमुपलब्धु मिति विदितमेव सदाशयानां विदुषाम्। एम. ए. उपाधि भूषितेषु केश्चिद्रूप्य-काणां दशकत्रयमप्युपार्जयितुं न प्रभूयते; कुत ईदृशाः स्वकुटुम्बभार भरणक्षमा, इति विदाङ्कुर्वन्तु विरोधिवचनाः। मानादरलाभायो-पयोगिन्युपकारवति कर्म्मणि धनायोजनस्य कथा तु तेषां सुदूर मपास्ता। किंच बहुभिरपरत्र लब्ध शिक्षै, राजकीये कर्म्मणि दत्तहस्तैः, प्रबुद्धबुद्धिभिर्मानार्होपाधिभिरपि लेखकैरेव भूयते तेषां धन प्राप्तिः कुटुम्बभरणक्षमापि न यशोजनिका। एवं स्थिते गुरुकुल विद्यार्थिषु धनोपार्जनानर्हतापादनं न शोभयति श्रीमन्ति विरोधिनामाननानि।

धनकथां साम्प्रतमुत्सृज्य ब्रह्मचारिणां भावि कृत्य विचारणे प्रवर्त्तामहे।

(१) प्रथमं तावद्, भारतीयग्रामाणां कीदृशी हीना दशेति, जानन्तो ऽपि विपश्चितो न तन्निराकरणाय प्रयतन्ते। तावदुन्नति र्जातिर्दुःशका,

यावदेषां दशासु परिवर्त्तनं न निधत्ते पदम्। ग्रामीणा वालाः पाठनीयाः सन्ति, एषामविद्या प्रयत्नतो नाशनीयास्ति। किं तेषां कर्म्म, किमकर्म्म, कोऽधिकारः, कथं करप्रदानादिसमये वर्त्तनीयम्, के राजनियमाः, कुत्र, कियच्च,तेषु ते बद्धा,इति सर्वं ते निवेदनीयाः। तेषुस्वधर्म्ममाहात्म्यं प्रदर्शनीयं, येन यत्र तत्र ग्रामेषु देशान्तरधर्म्मान्तरपरिग्रहो महता वेगेन निहितपदो न विलोक्येत। प्रबुद्धानामिदानीं राजनीतिविदां देशभक्तानां हृद्देशे जाज्वल्यमानस्य तथापि कर्त्तुम विदितोपायस्यास्योदारस्य कर्म्मणो यदि कथं चिदस्ति सम्भवस्तर्हीदं भोगादिभ्यः पराङ्मुखतया शिक्षितै र्गुरुकुल विद्यार्थि भिरेवोपपाद्यम्।

(२) अस्माभिर्बहोः कालादनवगतहेतुतया पतितत्वेनाभ्युपगतानां जातीना मुद्धारे कियान्प्रयत्नो ऽपेक्ष्यते, कियन्तो जना अपेक्ष्यन्ते, कियद् बलं,कियच्च कौशलमित्य पश्चिम मेव विपश्चिताम्। कदा किंच कारण माकलय्यास्माभि रासां परित्यागो व्यधायीति न ज्ञायते। साम्प्रत मासा मनुद्धारे सर्वेष्वपि व्यवहारेष्वात्मीयतयाऽनभ्युपगमे च स्वार्थ एव कारण मस्माभिर्मन्तव्यम्। अस्तु—प्रतिदिनं ता धर्म्मान्तरं स्वीकृत्य हिन्दुजनान्कुर्वते विरलान्। हिन्दुपद व्यवहृतै रार्यैस्तासामनादरः क्रियते तासु बहवो जना रोगिणोऽपि न केनापि सम्भाव्यन्तं न चाश्वास्यन्ते सेवा तु तिष्ठतु तावत्संन्यासिनी भूत्वा।

(३) क्षुत्पिपासा रुगादि क्लेश पीडितो न धर्म्ममपि पालयितुं प्रभवति। उत्तममपि धर्म्मं परित्यज्य रक्षकधर्म्मं दययोपबृंहितं गृह्णाति। खीष्टधर्म्मावलम्बिनोऽन्नजलौषधप्रदानपुरःसरं तान् रक्षन्ति। स्वाभाविकतया ते मूर्खत्वादजानन्तश्च सत्यं धर्म्मं, प्रत्यक्षानुसमफलो

पशोषितं, हृदन्तरे प्रचारकैः कृतपदं धर्मान्तर मूरी कुर्वते, इतीमां दुःसहां, बहोः कालाद स्त्यजां दुर्दशामापन्नाः सन्ति बहवो ऽस्मासु जनाः। तेषां शिक्षणं, रक्षादि च कियदावश्यकंकियांश्च तेष्वात्मीयता भाव आवश्यक इत्यधुना स्पष्टमेव।

अत्र विषये सत्स्वपि कृतकर्मसु मानार्हेष्वार्य्य-समाजपुरुषेषु नाद्यावधि महद्भूत्कार्य्यम्। अत्र गुरुकुल विद्यार्थिनां सम्भूय व्यापार मनुतिष्ठतामस्ति भूयस्यावश्यकता। अनेकपुरुषापेक्षमीदृशमनुत्तमं कार्य्यमालोक्य को नाम सुमना मनुते "नास्ति कार्य्यं गुरुकुल विद्यार्थिभ्यः"। अनुपम यशोजनके ऽस्मिन्महति कार्य्यें स्वार्थभावं शिथिलीकृत्य गुरुकुल वर्णिनः सुतरां प्रवर्तितु मर्हाः।

४ साम्प्रतं बहूनि गुरुकुलानि तेषां शाखाश्च बहुत्र भारतभूभागे समुद्भवन्ति। एषु का विद्यार्थिनां न्यूनता? केषु विषयेषु विद्यार्थिना मरुचिः? कथं च तेषु रुचिरुत्पाद्या? कथं वा निवारणीया वर्णिनां दोषाः? इत्यादयो विषयाः स्वयमनुभवविषयीभूतत्वात्स्नातकानां सुशका गुरुकुलभूमिविरहितां नेतुं स्नातकैः। एषामत उपयोगिनामाचारनिर्मातणां गुरुकुलानां बहुत्र प्रचारे, सञ्चालने च बद्धपरिकरा गुरुकुलवटवो, नितरां पटवः। एष्वतः स्नातकाना मस्ति भूयस्यावश्यकता।

एवं देशे प्रसृतानेककुरीत्यनाचारादिकूपनिपतितजनानामुद्धारे गुरुकुलविद्यार्थिनो दृढा रज्जवः। साफल्यानुसारं श्रमानुसारं चैतदादिषु मानादि लाभो भवत्येव जनानामिति मानपूजात्मकमप्यतो धनोपार्जनप्रयोजनं स्वधिगममेव।

अमरः

# हितोपदेश:

कथयामि ते हितं सखे !

प्रभुचरणेषु ध्यानं त्वया देयम् ॥ ध्रुवम् ॥

क्लेशा: सन्ति यदिह पथि बहव:,

भयहीनो भवलीन: ॥ १ ॥ प्रभुच०

---

चेतो नयति यदिह वहु दूरम्,

भज शरणम् व्रज चरणम् ॥ २ ॥ प्रभुच०

---

यदि वा द्रुह्यति व्यर्थं नीचो,

मा भैषी: मा भैषी: ॥ ३ ॥ प्रभुच०

---

पारे ब्रह्मणि कुरु विश्वासम्,

स्मर नीतिं, कुरु रीतिम् ॥ ४ ॥ प्रभुच०

---

निश्चितमेव गमिष्यसि पारम्,

यदि शक्ति र्यदि भक्ति: ॥ ५ ॥ प्रभुच० ।

**आनन्द:**

# जातिसेवा गरीयसी

सामाजिकस्य जन्तोर्मनुष्यस्य किमनवरतं ध्येयं स्यादुद्देश्यं वा तदेतद्यदुपकारोऽपरेषाम्। देशस्योन्नतिर्जगतो वो क्षति रित्येत दुद्देश्य-द्वयं मेकान्तेन नियतं मनसि धारणीयम्। यतोऽयं सामाजिकः, समाज एवास्य कार्यक्षेत्रम्। समाजस्य लाभ एव निजो लाभस्तस्य हानौ स्विका हानिरित्येष एव राद्धान्तो महर्षिणा दयानन्देनार्यसमाजस्य निर्धारितः स एव सर्वेषां भवितु युक्त इति। समाजिकं हि कार्य-जातमुद्दिश्य प्रवर्तमानस्य जीवनमादर्शजीवनं; तद्यथा प्रातः स्मरणी-यानां तत्र भवतां महात्मनां मृषिदयानन्दमहामद बुद्ध प्रभृतीनां चरितान्यासन्। एतेषां परोपकार एवैकं प्रधानं कर्तव्यमभिमतमभ-वत्। तथाह्याह तत्र भगवान् बुद्धः—'अनाथो लोक सन्निवास'—इ-त्यादि। अर्थात् 'लोकोऽयमनाथइवास्तेऽहमेव जात एनं सनाथयितुं रक्षितुमिति वा' एव ब्रह्मचारिणा भिक्षुणा च मनसि कर्तव्यम्। याथार्थ्येन तथ्य एवैष राद्धान्तः। दुर्वासनाः, दुर्वार्ता, दुराचरणानि च निर्बलस्य जनस्य मनः प्रमथ्नन्ति नाम तत्र यो हि ता दुर्वासन अधिक्षेप्तुं जनांश्च हितं प्रशास्तुमना, असौ स्वीयां स्थितिं सर्वस्माज्ज-नादधिकलयन्न तास्वनुषज्जत्त इत्येवमस्य मानसिकी आत्मिकी वा शक्तिरनुदिनमेधतेतमाम्। अपरश्चैतदनुभवगम्य यद्यावद्यावत्परो पकारकर्मणि मनः प्रवर्तते तावत्तावदेवामुष्मिनाधिकं मनोनिरमते। अथैवं तस्मिन् ननु परोपकार कर्मणि मनः सुखं विन्दते। तदैव च जीवनं निस्पृहं सदादर्शतां भजते। स्वार्थो हि मनसः सर्वा शक्तीरा-च्छिनत्ति, मनश्च सङ्कुचितं निर्मिमीते, परार्थं च मनो विकासयति तस्मिँश्च शक्तीरादधाति। इत्येवं जीवनोद्देश्यमेव समाजस्य स-बन्धूनां च कर्तव्यमेव भाव्यम्।

नवायुष्काः सहृदयाः वाचकाः! विचार्य्यतां मनसि काऽस्माकं दशस्य दुर्दशा। हन्त! तथापि लास्यादि न परित्यज्यते शारीरिकं लाघवं नाम स्वस्मिन्नाधेयम्?। किमित्यमुष्मिन् तमोमये जीवने निमज्जनम्। 'उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु' इत्यादि तत्र भगवतो व्यासदेवस्य कथनं परिपाल्य स्वजीवनं कृतार्थनीयम्। स्वदेशीयानां परिक्लिष्टाना मनु दिनं बुभुक्षावलाद्दैन्यकलितवाचां परिगलत्साराणां बन्धूनां हितं चिन्तयन्नहरहर नवोत्साहे पदं प्रति पदं प्रचलनीयम्। सामाजिकी सेवा हि गरीयसी नैतस्या मनो न तमोभावे निमज्जति। तत्सर्वैरस्माभिर्यथासामर्थ्यं देशसेवायै एव प्रयतनीयम्। यदेतद्ध्युद्देश्यं समीचीनं मानुषस्य जीवनम्। अमुष्मिन् नुद्देश्ये सर्वमिव सन्निहितं भवति। एतदस्माकं कर्म तदवश्यं परिपालनीयम्॥ शमित्योम्॥

"किशोरः"

---

## सुभाषितम्

प्रजोपतापशापोष्णैः पापार्तैर्भूभुजां धनैः।
जलैः सलवणैः पीतैरिव तृष्णा विवर्धते॥

क्षेमेन्द्रः।

# महिमा तवायं सूपचीयते

अयि भारतभूमे ! महिमा तवायं सूपचीयते ॥ ध्रुवम् ॥

हिमपर्वतपूजितोत्तमाङ्गम्,

सुतरां सागरधारिताधराङ्गम्,

वपुस्ते विशालं देवि ! शालते ॥ १ ॥ अयि भारत०

कुसुमेषु विलासिनो मिलिन्दाः,

हिमपुत्रीनववीचयो ह्यमन्दाः,

सुषमां शरीरे भावयन्ति ते ॥ २ ॥ अयि भारत०

वरवीरविभावनैकवीरा,

समये भावितभूरिधर्मधीरा,

भुवने प्रजेयं राजते हि ते ॥ ३ ॥ अयि भारत०

व्रतिना यतिना दयामयेन,

प्रतिबोधं गमिता ऋषिप्रमेण,

सकला प्रजा ते देवि ! शालते ॥ ४ ॥ अयि भारत०

सुजलां सुफलां विभावनीयाम्,

ननु वन्दे भवतीं तु सेवनीयाम्,

शिरसा नतो हं देवि ! भाविते ! ॥ ५ ॥ अयि भारत०

मधुपः

# भारतपातालयोः सम्बन्धः

## (२)

अयि वाचकाः,

बौद्धधर्मेण कथं प्रभावितः सेवितश्च पातालदेश इति पूर्वस्मिन् लेखे प्रादर्शि मया। अत्र मया सामान्यतः पातालस्य भारतेन सह सम्बन्धो न नवीनोऽस्ति परं प्राचीन एवेति प्रतिपादयिष्यते। अस्त्ययं विश्वासो विदेशीयानां यद् भारतस्य पातालेन सह सम्बन्धः कोलम्बस यात्रिणो न प्राक्तनोऽस्ति। यद्यपि अयं विश्वासः कदलीखण्डं खण्डितः श्रीमता स्वामिना दयानन्देन। तथापि अस्माभिरत्र तेषां श्रीमतां स्वामिना मयं निश्चय आधुनिकैः समुद्रे भूतैर्गवेषणैः स्थूणानिखनन्यायेन पुनः दृढीक्रियते। ऐतिहासोपानेन महाभारतीयं वृत्तमुपजीवता साधितं,यदर्जुनो नागवंशीयस्य कस्यचिद् राज्ञः 'उलोपी' नामधेयां दुहितरमुद्वाहयितुं पातालं प्रस्थित इति। दर्शितश्च तस्य समयस्य तयो मार्गोऽपि। यदि वयमिदं महाभारतीयमाख्यानमाधुनिकतत्व दृष्टिसाहाय्येन परीक्षामहे तर्हि अतिशयो विस्मयो नश्चेतसि समाविशतीति। कथयन्ति पुरा वृत्ते कृतपरिश्रमाः, यदिस्मन् समयेऽपि पातले नागल शब्देन पातालीया आदि निवासिन उच्यन्त येच नागान र्चन्ति स्म इति। साम्पतमपि अमी साभिमानं स्वात्मनो नागवंश्यान् विदन्ति। अब्बीत्रे सियर डीदी बोर बरो नामकः कश्चन पुरावृत्तवेदी निजपुस्तके नागलान् सरीसृपविशेषाणां जन्तूनां पूजकान् साधयति। एवमेव संस्कृत साहित्ये सर्प शब्दस्य पर्यायवाचको नागो ऽस्त्येव। नागाधीशस्य निःशेषो वृत्तान्तोऽविकल मुपलभ्यते बौद्धानामितिहासे। अर्जुनेन पतालमभिगत्य पूचालिता तत्र नाग पूजेति पुराणः साम्रेडं घोषयन्ति। एतादृशेन सास्येनाकामेनापि जनेन मन्तव्यमेव भविष्यति, यदासीद् बहुलः सम्बन्धः पातालभारतयोः॥

# चन्द्रगुप्तस्य शासने मार्गप्रबन्धः

( १ )

अयि पाठक महाभागाः! साम्प्रत मेव प्रकाशतां गतोऽति प्राचीनः संग्रहः कौटिल्यस्य। यश्चाणक्यो नन्दान्नवाऽपि वसुधारोपानिव समुच्चखान। यश्च चन्द्रगुप्तस्य महामात्यः सन्नत मनन्यमण्डलस्य भारतस्याधिराज्यं प्रापय्य प्रसिद्धिमापेदे। महदाश्चर्यं यदद्यावधि तस्य नामापि पाश्चात्याना मितिहासकृतां लेखिन्यानालेखि इतिहासे।

परमस्माकं कवयः स्थविरावलीचरितादिप्रणेतारः मुद्राराक्षसप्रणेता च विशाखदत्तस्तमुद्दिश्यैवात्मनां विलसितान्यग्रन्थन्।

मत्सरग्रस्ता बोद्धारः पाश्चात्याः। नूनं, 'भारतीयस्य ब्राह्मणस्य न स्यात् कदाचिदितिहासे महद्यश' इति ईर्ष्यया तस्य कथाप्रपञ्चोऽपि तैर्मिथ्याकथाप्रतिमोऽन्वमानि। महन्मौढ्यं खलु पाश्चात्यानाम्। अधुना तन्निर्मितार्थशास्त्रे प्रकाशं गते सकलोऽपि पाश्चात्यमत्सरजन्योऽन्धकारो दूरीभूतः। तथाऽपि केचित्पाश्चात्याः अर्थशास्त्र प्रणेतारं कौटिल्य इत्याख्यं सम्प्रदायं मन्यन्ते नैकमात्रं पुरुषविशेषम्। यश्च तेषां प्राचीनग्रन्थेषु कुण्ठताया मतेः परिणामः।

अस्यैवार्थशास्त्रस्य दण्डिनापि चन्द्रगुप्तशिक्षायै षष्ठि सहस्रश्लोकपरिमितं संगृहस्य विमर्शं विदधता, चाणक्य एव ग्रन्थकारोऽवधार्य विहितः। कामन्दकस्तु तस्यानन्यभक्त एव। अधुना तस्यैव आचार्यस्य महामतिमतश्चाणक्य वर्णानुपजीव्य किञ्चित्प्रपञ्चमारचयामः।

राज्यप्रबन्धे मार्गप्रबन्धः सभ्यताया माहात्म्य मिव लक्ष्यते। मार्गमन्तरा न क्वापि परस्परं देशानां सम्बन्धः स्थिरायते। इतिहेतोः तस्यैव विमर्शमवधारयामः। एको मार्गो हिमवत आरभ्य पाटलिपुत्रस्य मध्यतो निष्क्रम्य आसमुद्रं समाप्नोति एवमेव अन्येष्वपि कम्बोजादिदेशेषु नानामार्गप्रपञ्चो भारतशासकस्य प्रबन्धं साक्षात्कारयति स्म। तैरेवमार्गैरभूदेव महान् व्यापारसम्भारो देशस्य। यथा—

'स्थलपथेऽपि —"हैमवतो दक्षिणा पथाच्छ्रे यान्हस्त्याश्वगन्धदन्ता-जिनरूप्य सुवर्णं पण्याः सारवत्तरा" इत्याचार्याः

"नेति कौटिल्यः—कम्बलाजिनाश्वपण्याश्च प्रभूततरा दक्षिणा पथे। दक्षिणापथेऽपि बहुखनिस्सारपण्यः प्रसिद्धगति रल्पव्यायामो वा वणिक्पथः श्रेयान्। प्रभूतविषयो वा फल्गुपण्यः। तेनः पूर्वः पश्चिमश्च वणिकपथो व्याख्यातः"। (कर्मसन्धिः प्रकरणम्)

इदमेवोपक्रम्य पाश्चात्यानां(१)दादागुरुसमः मागस्थनीस महोदयोऽपि लिखति, यद्राजपथ एव पाटलिपुत्रमभिव्याप्य यथासुखं सिन्धुनदं याति। अनेनैव च राजमार्गेण प्रभाव मापन्नाः(२)शैलाक्षप्रभृतयो गान्धारादिदेशसामन्ता न कामपि राजापथ्यकारितामभजन्।

मार्गाणामुपर्युक्तप्रयोजनानि विहायान्यानि अपि पयोजनानि निर्दिष्यन्त आचार्येण।

"वणिक्पथः पराति सन्धानस्य योनिः"

"शत्रुमार्गणमेकं प्रयोजनम्।"

"वणिक्पथेन हि दण्डगूढपुरुषातिनयनम्"

"शस्त्रावरणयानवाहनक्रयश्च क्रियते"

"अर्थादेतेन सेनादूताशस्त्रादिसम्भाराणा मात्रागमन मेवा परं प्रयोजनम्"।

बहुविधाश्च पन्थानः श्रूयन्ते।

एको य राजमार्गः घण्टापथइत्यपर पर्यायः। अत्र राजायथा सुखं शस्त्रनद्धभटैरावृतः विहारस्य कृते भ्राम्यति स्म।

"निर्याणेऽभियाने च राजमार्गमुभयतः कृतारक्षं दण्डिभिरपास्तशस्त्रहस्तप्रव्रजि कं मध्यं गच्छेद्। नपुरुषसम्बाधमवगाहेत।"

एते राजमार्गा स्त्रयः प्राचीनाः प्राक्दिशो गामिनः, त्रय उदीचीनाः इति षड् भवन्ति स्म।

---

(१) दन्तभग्नो भवेद्दादा आवा च गतभर्तृका (स्फुटम्)।
(२) सलूकस

उलोपी ( Ellupl ) शब्दोऽपि महान्तं विचारमपेक्षते। नायं शब्दः संस्कृतभाषाया अन्यभाषाया वा प्रतीयते। न हि 'pl,tl' प्रभृतयो व्यञ्जनसंघाः शब्दानामन्ते श्रूयमाणाः पातालादि निवासिनां भाषामन्तरेण कचनापि स्थितिं जुषन्ते। अनयैव गमनिकया 'अटलस' अट लान्टिक शब्दानां धातवः पातालस्य 'टोलटीज़' भाषां विहाय कस्याश्चिदपि भाषायां नोपलभ्यन्ते। पातालस्य भाषाया अटलान्टिक शब्दस्य धातुः जलयुद्धयोर्वाचकोऽस्ति। उरगानामकस्य कच्छस्य मुखे विदितः कश्चन 'अटलन नामकः प्रदेशो गवेषितः पाताले। यश्चाधुना अक्को पदेन व्यवह्रियते। अन्यच्च स्वामिनो पलक्षितो मार्गोऽपि स एव यश्चाधुनिकैः साध्यते स्वीक्रियते च।

यदि वयं रामायणप्रबन्धमनुशीलयाम स्तर्हि प्रतीयते, आसीत् सान्द्रः सम्बन्धो भारतस्य पातालेन सह। ग्रथितश्चैतदुत्तर काण्डे—

"अशक्नुवन्तस्ते विष्णुं, प्रतियोद्धुं बलादिताः। त्यक्त्वाऽलकां गता वस्तुं, पातालं सहपत्नयः" ॥ 'सुमालिनं समासाद्य राक्षसं रघुसत्तम। स्थिताः प्रख्यातवीर्यास्ते वंशे सालकटं कटे" ॥ एतादृशानि पद्यजातानि सविशदं यन्ति, यदवश्यमेव भारतीयास्तत्र गता स्ते चाभिगत्य स्वीयवंशानपि तत्रैव निवेशयामसुरिति। यथा संस्कृत साहित्यस्य ग्रन्थेषु भारतीयानां पाताले गमनवर्णनं पठ्यते एवमेव पातालस्य प्राचीनग्रन्थेष्वपि भारतीयानां महात्मनां तत्रागमनमभि नन्द्यते।

समुपलभ्यते प्रवादोऽयं पातालस्य देवैक विषये यदयं देवः पौर्वी दिशमसिक्रम्य अटलान्टिक महासागरश्चालीत्य पातालदेशे समायात इति। आगते तस्मिन् महात्मनि देवे, पातालभूमिः समृद्धिशालिनी महोजस्विनी च संजज्ञ इति।

अयि वाचकाः—

एतादृशान् शब्दसंवादान् प्रवादाश्चाँधिगम्य को न मंस्यते बलवन्तं सम्बन्धमेतयोः। पातालदेशस्य रामसीतवोत्सवस्तु अधुनापि क्रियमाणः किं न साधयति भारतीयं प्रभावम्? मेक्सीकोपेरुप्रदेशयोः

सभ्यता नांशतोऽपि भारतीयां पुरातनीं सभ्यता मतिक्रामति। तयोः सैव सभ्यतास्ति या च भारतस्य पुरासीदिति। पेरुप्रदेशस्य 'इनका' नामधेयेन प्रजाक्षेमङ्करेण नृपतिना कथं सकौशलं शासिता प्रजेति, यत्सत्यं तद्वृत्तं पठित्वा भारतीयं सौराज्यं नयनयोः पुरतो विलसतीति। तस्य नृपतेः सविस्तरं राज्यशासनं न वयमस्मिन् चोद्दिष्टे निबन्धे दातुमीशा, इति यथा समयमग्रे प्रतिपादयिष्यते। अतः परञ्च तयोः सम्बन्धविषये एवान्यत् किंचिद् दर्श्यते। पातालपुस्तकेषु लिखितं दृश्यते यद् पूर्वमेते सूर्यचन्द्रयोर्ग्रहणसमये घण्टानादादिकं कुर्वन्ति स्म। अस्मिन् समये कश्चन राक्षसस्तौ ग्रसत इत्यासीद् द्रढीयान् विश्वासोन्मेषस्तेषाम्। इदञ्च वृत्तं भारतीयमेव प्रतीयते। एवमेव गणेशदेवतायाः पूजापि भारतीयैव प्रतीयते। भारतीया कूर्मावतारकथापि तत्रत्यग्रन्थेषूपलभ्यते न च सा कस्मिंश्चिदपि अंशे—व्यभिचरतीति।

एवमेवान्येऽपि संवादा उपलभ्यन्ते; यैः निश्चीयते यदवश्यमस्माकं भारतीयैः संवासितः पाताल इति।

पातालस्याधुनापि समुपलभ्यानि मन्दिराणि रचनायां तादृशान्येव यादृंशि भारतीयानि बभूवुः।

बहुभिर्विद्वद्भिरत्र विषये नयनविक्षेपः कृतः, अतएव सम्भाव्यते—यद् आगमिष्यति समयो यदा च सर्वेषामपि भ्रमाणां विच्छेदोऽभ्राणां वात्येव भविष्यतीति।

---

टि०—श्रीमन्तः! अत्र स्पष्टमेव सालकटंकटावंशो रामायणे पातालदेशे शासद् दृश्यते। परं पातालेतिहासान्दोलनेनाऽपि तादृशमेवाऽपरं नाम तस्या पभ्रंशभूतमिव पठ्यते "छालकूटेकूटा" अत्राऽपि विमर्शमेव धारयिष्यन्ति विमर्शकाः।

सम्पादकः

# भारतभूः

हिमाद्रितटमस्तके सितरुचा यदीयं यशो

नभोभुवि विराजते ऽनुपमभारती मेदनी ।

अनेकगिरिशृङ्गकैर्विजयकेतुभिः शोभिता ।

पुराऽपि हृदयंगमा भवति काऽपि चेतोहरा ॥

---

पवित्रसलिलैः शुभैर्मलहरैः सलीलं धुनी,

धुनोति धरणीरुहः शमयतीव ताञ्छीकरैः ।

अमन्दसुखसम्पदा वलयिता धरा ऽम्भोधरैः

पुराऽपि हृदयंगमा भवति काऽपि चेतोहरा ॥ २ ॥

---

अनेक नवसौरभैरनुपमैः शुभैरौषधै,

र्वने गिरितटे ऽपगातटतले समृद्धायते ।

समृद्धफलशालिभिस्तरुवरैश्च कल्पद्रुमैः

धरा तु हृदयंगमा भवति भारती भारती ॥३॥

---

वनेषु मुनिगौरवम्, गिरिषु सिद्धविद्याधराः,

नभःसु विहितादरा गगनचारिणः स्वर्गजाः ।

यदीयजनता पुरा जनपदेषु धर्मव्रता,

धरा तु हृदयंगमा भवति काऽपि मे भारती ॥ ४ ॥

———

न पापकलुषं तलं किल पुरा यदीयं क्वचित्,

नचाऽपिपरतन्त्रतानिगडितं मनः किञ्चन ।

न राजपद चारिणा मतिगृधा प्रजापीडनम्

अभूदिय महो पुरावसुमती न सा राजते ॥ ५ ॥

———

गतं क्व नु तलं पुरा यद भवद्धिरण्यप्रभम्,

गता क्व नु नृपाः समे गुणगणै र्हृदो हारिणः ।

गताः क्वनु वसुन्धरा नरशरीरसंव्यापिनी

अनेक नरवीरसू र्भरतभू रभूद्द या पुरा ॥ ६ ॥

———

गताः क्व ननु मातरो ह्यमरशक्तिमत्यो ऽधुना

प्रचण्ड नरकेसरिप्रसवपूतगर्भाः समाः ।

धरा यदिह भारती शतकफेरुसंव्याकुला,

श्मशानवसतेः समा भवति हा। विधेर्वैधुरी ॥ ७ ॥

———

एको मार्गो रथ्या इत्याख्यः चतुर्दण्डकपरिमाणो द्वात्रिंशत् फी-टाख्य मितः यतो रथाः सुखेन धावन्ति स्म।

अपरोऽयं रथपथः, लघवो रथा यतो निष्क्रामन्ति स्म। एते पञ्चारत्नि व्यायता अभूवन् ( १० फु० )।

चतुररत्नि ( ८ फु० ) मिताः पशुपथाः। एवमेव भिन्न २ परिमाणमिता महापशुपथाः, क्षुद्रपशुपथाश्च नाना ऽभूवन्। एवमेव खरोष्ट्रपथा अपि पृथग् आसन्।

एतैर्मार्ग निवहै रभूदेव महत्सौलभ्यं सर्वस्यापि प्राणभृतः संचारस्य।

एवमेव चक्रपथोऽपि श्रूयते यत्र व्यापारद्रव्यभृतां शकटानां परम्परा क्रामति स्म।

अन्ये च पादपथाः मनुष्यपथाः अरत्निद्वयपरिमिताः केवलं पद्भ्यां निष्पतते जनायाऽभूवन्।

एष्वेव पथेषु केचन केवलं वणिक्पथा आसन् यत्र व्यापार संविभागः प्रपञ्चायते स्म।

एते पथा नाम्ना चक्रपथांऽसपथ पादपथ खरोष्ट्रपथा एव व्यापारे प्रयुज्यन्ते स्म।

अपरोऽयमावश्यको मार्गो राष्ट्रपथाख्यः प्रान्तात्प्रान्तं पर्यटति सर्वमपि देशजातं च सम्बध्नाति।

पशूनां चरणस्य कृते त्यक्तभूभागं यान्तः पन्थानाः विवीतपन्थानः परिभाष्यन्ते स्म।

चतुःशतग्रामेभ्यो ऽष्ट शतग्रामेभ्यो वा आगच्छन्तः पन्थानः एकत्र दुर्गे केन्द्रायमाणे तत्र मिलन्ति, ते द्रोणमुखपथा आख्यायन्ते।

धान्यादि वपनक्षेत्रेषु धावमाना अध्वानः सयोनिपथा कथ्यन्ते। दुर्गनिवेशशिविरा दिषु गच्छन्तो ऽध्वानो-व्यूहपथाः, श्मशान मुपसर्प-

श्मशानपथाः ग्राममुद्दिशन्तो ग्रामपथाः एवं चत्वारोऽपि प्रायः द्वात्रिंशदरत्निभिना व्यायता अभूवन् ।

एव मेव च हस्तिक्षेत्रपथाः करिवनस्य पन्थानश्च दण्डकद्वयव्यायताः ।

वनमार्गा वनपथापरनामानः दण्डकचतुष्टयमिताः ।

एवमेव च सेतुपथा नदी तटाकेषु गच्छन्तो दण्डक चतुष्टयमिता अभूवन् ।

एवमेव रथचर्यासंचारा रथेभ्यः काष्ठमयास्तरण निर्मिताः पस्तरादिकठिनद्रव्यचिताश्च बहवो अभूवन् ।

'पूतोली' अपि पथ एव अट्टालकद्वयं यः संयोजयति । देवपथो देवालयमुपसर्पति ।

साधारण मार्गः स्तुचार्याशब्देन व्यवाहियत स्म ।

एवमेव अतिक्षुद्रा अध्वानः स्कन्ध उपाध्य विशिखादि नामभृत आसन् । यथाभाषायाम् पगदण्डी मेड़ इत्यादयः ।

उपरि निर्दिष्टपथा सर्वेऽपि राजशासने स्वायत्तीकृता आसन् नकोऽपि तान् विनाशयितुं विकृतिमापादयितुं वा क्षमते स्म अन्यथा दण्डितो ऽभूत् ।

इत्येवं वयमिदं पथप्रकरणं कौटिल्यस्यार्थशास्त्रस्य एकं विषयं आलोचयामः ।

एवमेव यदि पाठकाः अन्यदप्यपेक्षिष्यन्ते चाणाक्यमतिविलसितं मालोचयितुं, तदवश्यं अन्येष्वपि विषयेषु वय मालोचनां विधायोपायनीकरिष्यामः

———

गताः क नु धुरंधराः नृपतिवैभवा दानिनः,



वदान्यगुरवो नु यैः सलिलधिर्मरूकारितः ।

यतो वसुमती पुरा वसुमयी सपद्याविला,

दरिद्रनयनोदितैः सततपातिभिर्वाष्पकैः ॥ ८ ॥

---

अहो क नु गिरां विदो ह्यतुलवाङ्मयाः शारदा,

पवित्रितमुखाम्बुजा विलयमीयिवांसो ऽधुना ।

यतो ऽद्य मम मेदनी दुरितवाक्प्रकाण्डै र्वृता,

प्रभूतकलहै र्यथा द्विकुलैः कचिद्वीथिका ॥ ६ ॥

राजहंसः

---

# उषायाः नियमाः

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते। आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते-किञ्च सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोप्यधिको यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति। येन मनागपि संस्कृतमवबुध्यमानानाम् र्थावबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।≈) त्रैमासिकं च। मूल्यमष्टावाणकाः ॥) एकस्याङ्कस्य मूल्यं द्वावाणकौ ≈) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं गृहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्या मभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रादेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्र ग्राहकसंख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन दरं प्रागेव विज्ञापयितव्याः। विपर्य्यये अस्माभिः सप्ताहद्वय पर्यन्तं कश्चिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या कोरे मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः। अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते।

प्रबन्धकर्त्ता, उषा
डाकघर शामपुर